# श्रीश्रीवेदान्तस्यमन्तकः

## तत्त्वप्रदीपनीटीकोपेतः

श्रीश्रीगोविन्दभाष्यकारश्रीलबलदेवविद्या[illegible]णविरचितः ।

श्रीग्रन्थप्रकाशकः टीकासंशोधकश्च

**श्रीजगदानन्ददासः**

टीकालेखिका-

**श्रीमतीहरि[illegible]दासः**

# श्रीश्रीवेदान्तस्यमन्तकः

## तत्त्वप्रदीपनीटीकोपेतः

श्रीश्रीगोविन्दभाष्यकारश्रीलबलदेवविद्याभूषणविरचितः ।

श्रीग्रन्थप्रकाशकः टीकासंशोधकश्च

**श्रीजगदानन्ददासः**

व्याकरणतीर्थः, न्याय, वेदान्त-वैष्णवदर्शन-सांख्ययोगाचार्यः (प्राप्तस्वर्णपदकः)
प्राचार्यः श्रीजगन्नाथवेदकर्म्मकाण्डमहाविद्यालयः, पुरी

टीकालेखिका -

**श्रीमतीहरप्रियादासः**

सर्वदर्शन, द्वैतवेदान्ताचार्यः (वैष्णवदर्शनाचार्यः,) (प्राप्तस्वर्णपदका)
अध्यापिका-दर्शनविभागः- श्रीजगन्नाथवेदकर्म्मकाण्डमहाविद्यालयः, पुरी ।

प्रकाशकः —

श्रीजगदानन्ददासः

श्रीराधाकान्तमठः, श्रीश्रीगौरगम्भीरा, पुरी

प्रथमसंस्करणम् —

प्रकाशतिथिः—

श्रीश्रीगौरपूर्णिमा

गौराब्दः-५०४

खीष्टाब्दः-१९९०

प्राप्तिस्थानम् —

श्रीश्रीराधाकान्तमठः; श्रीगौरगम्भीरा, पुरी ।

मूल्यम् —

षोडशरूप्यकाणि (रू १६-००)

मुद्रकः —

श्रीनारायणप्रेस्

बालिसाहि, पुरी ।

# समर्पणम्

येषां शुभाशयमवाप्य सदनवद्यं
विध्वंसिता भवति मे गहनाज्ञतात्र ।
येषां प्रकाशयितुमेतदिहास्मि कांक्षा
तेषां पदाब्जयुगले विनता गुरूणाम् ॥ १

भक्त्यैकगम्यकरुणावरुणालयस्य
जातामहेतुककृपां च शचीसुतस्य
प्रेमाश्रुपूर्णनयना भृशमास्मरन्ती
तत् पादपद्मयुगले नतमस्तकास्मि ॥ २

यस्मिन्नेव पदारविन्दयुगले ब्रह्मेशदेवादयः
शुद्धान्तःकरणाः कृताञ्जलिपुटा ध्यायन्ति सर्वात्मना ।
सर्वाभीष्टदमेवसन्ततमहो यत् याचकानां महत्
तस्मिन्नद्य समर्प्यते कृतिरियं वेदान्तवाक्यान्विता ॥ ३

टीकाकर्त्री

**अध्यापिका श्रीमती हरप्रियादाशः**

वि.ांसश्च ग्रन्थानुशीलनेन आनन्दं लभेरन् । वामनेन चन्द्रधृतिरिव यथा कथञ्चित् श्रीग्रन्थप्रकाशनञ्च सदोपास्यसचलाचलश्रीजगन्नाथश्रीगौरगोविन्दस्य चरणकमलयोः समर्प्यते इत्यलं बहुना ।

प्रकाशकः—

श्री जगदानन्ददासः

व्याकरणतीर्थः, न्यायवेदान्तवैष्णवदर्शनसांख्ययोगाचार्यः (प्राप्तस्वर्णपदकः)

आचार्यः- श्रीजगन्नाथवेदकर्मकाण्डमहाविद्यालयः, पुरी ।

# श्रीग्रन्थकर्त्तुः संक्षिप्तपरिचयः

त्रिलोकपावनमस्माकं पुण्यप्रसूत्कलभूखण्डम् । यत्र सर्वविदितसर्वाराध्यदेवदेवश्रीजगन्नाथदेवोबलभद्रसुभद्राभ्यां नित्यं विराजतेतमाम् । अस्य कृतिसन्तानोऽस्माकमाचार्यः श्रीलश्रीबलदेवविद्याभूषणपादः । यस्याविर्भावस्थलं अत्रत्यबालेश्वरमण्डलान्तर्गतश्रीक्षीरचोरागोपीनाथविजयस्थलीरेमुणां निकषा कश्चित् पल्लीग्रामः, समयस्तावत् सप्तदशशताब्दी, वैश्यकुलोद्भवश्चायम् । शैशवावस्थातः प्रबलविद्यानुरागविषयवैराग्यादिसर्वसद्गुणविमण्डितोऽयं त्यक्तगृहः सन् चिल्लिकाह्रदस्यापरपार्श्वस्थकुत्रचिद्विद्वद्वसतौ कुतश्चिद् विदुषः सकाशाद्व्याकरणकाव्यालङ्कारादिकमधीत्य न्यायशास्त्रेऽसाधारणपाण्डित्यमर्ज्जयित्वा शाङ्करभाष्यादिवेदान्तशास्त्रमनुशीलनपुरःसरं माध्वभाष्यस्यसारवत्तामुपलभ्य तत्संप्रदायी बभूव । स्वल्पकालेन दाक्षिणात्यार्य्यावर्त्तादिस्थैः विद्वद्वरिष्ठैः संन्यासिभिश्च साकं वेदान्तशास्त्रालोचनेन प्रभूतं सोपाधिकं सत्कारं लब्धवान् दिग्विजयी चाभवत । ततः श्रीपुरुषोत्तमक्षेत्रमागत्यात्रत्यविद्वद् समाजलब्धप्रतिष्ठितैः श्रीमाध्वगौरेश्वरवैष्णवसंप्रदायिविद्वत्प्रवरैः श्रीदामोदरदासाभिधैः साकं सम्मिल्य श्रीपादजीवगोस्वामिविरचितषट्सन्दर्भालोचनेन तत्शिष्यत्वमङ्गीचकार । कियत्कालानन्तरं श्रीधामनवद्वीपदर्शनपुरःसरं श्रीधामवृन्दावनं प्रति जगाम ।

तत्र प्रेमपुरुषोत्तमकलिपावनानतारभगवच्छ्रीकृष्णचैतन्यदेवस्य पार्षदप्रवर-श्रीलश्रीविश्वनाथचक्रवर्त्तिठक्कुरपादानामानुगत्येन श्रीमद्भागवतादिकं निखिल-भक्तिशास्त्रमनुशीलयामास । ततोऽपि परमहंसवैष्णववेशं गृहीत्वा दीनहीना-किञ्चनभावेन विशुद्ध रागानुगा भक्तियाजनं कृतवान् । तदवसरे तत्कालिन-राजस्थानजयपुरराजधान्यां नित्यविराजितश्रीराधागोविन्ददेवपूजायाः श्रीनारायणपूजातः अग्राधिकारविषयमवलम्ब्य काश्चित् विप्रतिपत्तयः समुपस्थिताः श्रीरामानुजवैष्णवसम्प्रदायिभिः । तत्समाधानाय तद्राज्ञः आह्वान क्रमेण श्रीलविश्वनाथचक्रवर्त्तिभिः साशीर्वादप्रेरितः श्रीलबलदेवः जयपुरं प्रति गत्वा तत्र रामानुजीयवैष्णवमण्डलीभिः साकं शास्त्रार्थेन विजयी बभूव । ततः प्रभृतिः यथापूर्वं श्रीराधागोविन्ददेवस्य सेवापूजायाः अग्राधिकारः इदानीं यावत् प्रचलति । सम्प्रदायानुरोधेन स्वीयसंप्रदायस्य प्रस्थानत्रयमनुप-लभ्य तदत्यन्तमावश्यकं मत्वा कियद्दिनाभ्यन्तरे श्रीगोविन्ददेवस्य स्वप्ना-देशेन वेदान्तसूत्रोपरि श्रीगोविन्दभाष्यं रचयामास, यदेव श्रीलजीव गोस्वामिपादविरचिताचिन्त्यभेदाभेदवादस्याधारस्वरूपम् । तदनन्तरं ईशादि-दशोपनिषद्भाष्यं श्रीमद्भगवद्गीतोपरि "गीताभूषणभाष्यं" च कृत्वा "विद्याभूषणं" इत्याख्येनोपाधिना भूषितः । तत् प्रभृतिः श्रीबलदेवविद्या-भूषणः इत्याख्या तत्यवर्त्तते । तस्य पाण्डित्यप्रतिभाचातिमर्त्या विद्यते । अत्यल्पकालेन विशुद्धरागानुगाभक्तिसिद्धान्तमाधारीकृत्य विविधभक्तिग्रन्थान् टीकाग्रन्थांश्च प्रणीतवान् । ग्रन्थनामानि प्रदेयानि श्रीगोविन्दभाष्यम्, तस्य सूक्ष्माटीका, श्रीसिद्धान्तरत्नं, तट्टीका च । श्रीप्रमेयरत्नावली, श्री-सिद्धान्तदर्पणं, श्रीवेदान्तस्यमन्तकः, साहित्यकौमुदी, तट्टीका च, व्याकरण कौमुदी तट्टीका च, दश दिशोपनिषद्भाष्याणि । श्रीगीताभूषणभाष्यं, [गीतोपरि], श्रीविष्णुसहस्रनामभाष्यं, श्रीमद्भागवतोपरि वैष्णवानन्दिनीटीका, श्रीकाव्यकौस्तुभम्, श्रीछन्दकौस्तुभम्, श्रीसंक्षेपभागवतामृतटीका, श्रीषट्-सन्दर्भटीका, श्रीगोपालतापन्युपनिषट्टीका, श्रीश्यामानन्दचरितमित्यादयः ग्रन्थ-रत्नानि इदानीं लभ्यन्ते । अन्येऽपि बहुग्रन्थाः रचिताः इति श्रूयते ।

एतन्मते ईश्वरः, जीवः, प्रकृतिः, कालः, कर्म, इत्येतानि पञ्चप्रमेयाणि

स्वीक्रियन्तेप्रत्यक्षानुमानशब्दा इति प्रमाणत्रयमपि स्वीकृतम् । तत्र ईश्वरः विभुः चेतनः, सर्वज्ञाद्यनन्तकल्याणनित्यगुणस्वरूपः । नामस्वरूपविग्रहरूपेण नित्यत्रिधा विद्यमानः । सच्चिदानन्दमयः सत्त्वादिप्राकृतगुणविवर्जितः दृश्या-दृश्यानन्तवैचित्र्यमयविश्वब्रह्माण्डस्य निमित्तोपादानकारणस्वरूप । अचिन्त्यानन्तसहस्रशक्तिमान्, अचिन्त्यशक्त्या सगुणःनिर्गुणः, व्याप्यः व्यापकः, अणुः महान्, व्यक्ताव्यक्तादिस्वरूपः 'ब्रह्मपरमात्मभगवानिति त्रिधाभिव्यक्तः । धर्मसंस्थापनाय अधर्मविनाशाय च युगावताररूपेण श्रीरामकृष्णादिस्वरूपाभिव्यक्तः । अनन्तावताराः नित्यशाश्वतस्वरूपास्तेषु अंशकलादयोऽपि परिगणिता दृश्यन्ते । परन्तु सर्वे नित्याः हानोपादानरहिताः आविर्भावस्वरूपाश्च सच्चिदानन्दविग्रहमयाः । तत्र श्रीयशोदानन्दनः श्रीकृष्णः एव स्वयं भगवान् उच्यते । वैकुण्ठाधिपतिनारायणस्तस्य विलासस्वरूपः । परिपूर्णषडैश्वर्यादपि श्रीमन्नारायणतः श्रीकृष्णस्य माधुर्याधिक्यात स्वयंरूपता स्वयंभगवत्ता च निर्णिता । अन्ये मत्स्याद्यवताराः अंशकलावताराः कथ्यन्ते न्युनशक्त्यभिव्यक्तेः । भगवद्धामलीलापरिकरादयः चिन्मयस्वरूपाः अप्राकृताः अविनश्वराश्चा जीवः, अणुः चेतनः, व्याप्यः, नित्यः, गुणातीतः सुखमयः नित्यभगवद्दासस्वरूपः । त्रिगुणातीतोऽपि मायया प्राकृतस्वरूपः आत्मानं त्रिगुणात्मकं मन्यमानस्तत्कृतं भौतिकं सुखदुःखादिकं भुङ्क्ते । अहं दुःखी अहंसुखीति मन्यते, एवमेव जन्ममरणस्रोतपतितः सन्ननेकजन्मभ्रमणानन्तरं अन्तर्यामिरूपश्रीगुरुकृपया श्रीभगवद्भजनेन नित्यशाश्वतीं चिरन्तनीं अहैतुकीं श्रीकृष्णप्रेमभक्तिं लभते । तदेव तस्य परमचरममतिरिति सर्वशास्त्रशिरोमणिश्रीमद्भागवतसिद्धान्तः । प्रकृतिः-जडस्वरूपा, बहिरङ्गाशक्तिः । जीवानावृणोति विक्षिपति च । भगवत्शक्तिरूपेण जगदुपादानकारणम् । न तु स्वातन्त्र्येणोपादानता तस्याः इति दिक् । कालः त्रिगुणशून्यजडद्रव्यविशेषः अतीतादिव्यवहारहेतुः सर्गप्रलययोर्हेतुश्च । नित्यः, सर्वनियामकोऽपि ईश्वराधीनः कर्म, क्रियारूपं कृतिसाध्यमनादि बीजाङ्कुरादिवत्, शुभाशुभभेदेन द्विविधम् वेदविहितं शुभं तन्निषिद्धमशुभम् । नित्यनैमित्तिकभेदेनपि तद्वत् ।

परन्तु विवेकिनः मुमुक्षोः सर्वमेव हेयमिति दिक् । श्रुतिस्मृतिपुराणेतिहासादिशास्त्रानुशीलनजनितापरोक्षज्ञानस्वरूपभगवद्ह्लादिनीसारसमवेत—संवित्साररूपाभक्तिरेव आत्यन्तिकदुःखनिवृत्तिः पुरस्सरमा आत्यन्तिकसुखप्राप्तिरिति शास्त्रनिस्कर्षः सिद्धान्तः ।

—*—

# कृतज्ञताज्ञापनम्

शास्त्रमनन्तं, ज्ञानरत्नाकरश्चापारः, यत्तरणाय मनीषीणामप्यसामर्थ्यं दृश्यते । तादृगज्ञानसमुद्राद् ज्ञानरत्नाहरणाय मम या प्रवृत्तिः सा नितरामुपहसनीयेति मन्ये । तथापि कस्यचिन्महानुभविनो वाक्यं स्मर्य्यते,— यत् "अनन्तज्ञानसमुद्रसमीपे वयं केवलमुपलखण्डमात्रस्य संग्राहकाः" । उक्तिश्चः— "अनन्तशास्त्रं बहुवेदितव्यम् स्वल्पश्च कालो बहवश्च विघ्नाः" इति । मन्ये पिपिलिकायाः सिन्धुतरणाभिलाषवत् मादृगज्ञानान्धजनस्य ज्ञानाब्धिसन्तरणं मनोरथमात्रम् । तथापि "काव्यशास्त्रविनोदेन कालो गच्छति धीमतामिति न्यायेन सुधियां मार्गमवश्यमवलम्बनीयमिति विचार्य सत्यप्यसार्थे जातेयं मम महती प्रवृत्तिः । अतः आदौ असीमं ज्ञानसिन्धुं प्रति मम हार्द्दिकप्रणामाञ्जलिः । द्वितीये अखण्डज्ञानाकराधारभूतस्य सर्वज्ञविभु-पुरुषोत्तमश्रीजगन्नाथाभिन्नश्रीगौरगोविन्दस्य पदारविन्दयोः अकैतवं सहस्रं भक्तिनिवेदनम् । तृतीये येषां शुभाशीर्वादः साहाय्यं सहयोगश्च मम सफलतायाः मूलं तेषां मम निःश्रेयसः अभिलाषिणां श्रीजगन्नाथवेदकर्मकाण्डमहाविद्यालस्य प्राचार्य्याणामभिवन्दनीयगुरुवर्य्याणां बहुशास्त्रकृतभुरिपरिश्रमाणां श्रीजगदानन्ददासमहाभागानां कृते आन्तरिकमभिनन्दनं सानुनयं प्रणिपातं च । स्वकीयामुल्यसमयविनियोगेन टीकायाः संशोधनकार्यं तैः सम्पादितमिति कृत्वा तेषां सविधे मम हार्द्दिकं कृतज्ञता-

ज्ञापनम् । टीकां कर्तुं प्रथमं प्रोत्साहनं मया तेभ्यः प्राप्तमिति कृत्वा तेषां चरणकमलयोः आन्तरिक भक्तिपूतं प्रणामाः विनिवेदयामि । अन्त्ये मे सततहितैषिणां गुरुवर्य्याणां डॉ० नीलकण्ठपतिमहोदयानां श्रीमतां प्यारीमोहन-पट्टनायकमहाभागानाञ्च कृपापूतचरणारविन्दयोर्भक्तिविधौततमम अन्तिम प्रणताञ्जलिः ।

परिशेषे कृताञ्जलिपुरःसरं प्रार्थयामि यत्, यद्यपि गुरुवर्य्याणा मुपदेशेन मादृशी अज्ञा कार्य्येऽस्मिन् प्रवृत्ता, येनकेन प्रकारेण टीकेयं मया समाप्ता च, तथापि अज्ञानजनिताः अनवधानजन्याश्च त्रुटयः विद्वद्भिः क्षन्तव्याः इति भूयो भूयो मम निवेदनम् ।

—*—

## वस्तुकथा—प्रथमः किरणः

मानाधीना मेयसिद्धिरिति शास्त्रतात्पर्यमाधारीकृत्य प्रमेयपदार्थानां सिद्धिनिमित्तं प्रमाणस्यावश्यकता विद्यते इति असंशयेन वक्तुं शक्यते । अतएव शास्त्रनिबन्धने प्रमेयपदार्थानां विचारात् प्रागेव प्रमाणस्य विचारः क्रियते सुधिभिः । एतस्मिन्नेव प्रसङ्गे विद्वद्वरेण आचार्येण मोक्षाकर-गुप्तेन उक्तमस्ति "प्रेक्षापूर्वकारिणोऽर्थजनाः सर्वपुरुषार्थसिद्धिनिमित्तं प्रमाणमनुसरन्तीति प्रमाणमादौ व्युत्पाद्यते" । वेदान्तस्यमन्तकग्रन्थेऽपि प्रमेय पञ्चकानां निर्णयात् प्रागेव प्रमाणनिर्णयः क्रियते । तत्र अष्टौ एव प्रमाणानीति स्वीक्रियते । विभिन्नानां दार्शनिकानां प्रमाणसंख्याविषये विप्रति-पत्तिः वर्त्तते, तत्र प्रत्यक्षमेकं चार्वाकाः, बौद्ध-जैन-वैशेषिकाश्च प्रत्यक्षा-नुमानमिति प्रमाणद्वयम्, योग-सांख्यै प्रत्यक्षानुमानशब्दइति प्रमाण-त्रयं स्वीकुर्वन्ति । प्रत्यक्षानुमानशब्दोपमानइति प्रमाणचतुष्टयं नैयायिकाः, प्रत्य-क्षानुमानशब्दोपमानार्थपत्त्यनुपलब्धिश्चेति प्रमाणषट्कं मीमांसकाः वेदान्तिनश्च

अष्टौ प्रमाणानि पौराणिकाः, नवविधं च प्रमाणमिति साहित्यिकाः कथयन्ति । सत्सु अपि नवविधेषु प्रमाणेषु तत्र प्राधान्यतः श्रीमद्विद्याभूषणपादेनाङ्गीकृतानि प्रत्यक्षानुमानशब्दा इति त्रीण्येव प्रमाणानि । तत्र अर्थसन्निकृष्टमिन्द्रियं प्रत्यक्षम् । अनुमितिकरणमनुमानम्, इत्येवंरूपेण सर्वेषां प्रमाणानां लक्षणं निरूपितम् । मुख्यतः त्रीणि प्रमाणानि स्वीकृतानि । यतो हि उपमानस्य अर्थापत्तेश्च अनुमाने अन्तर्भावित्वम् । अभावस्य प्रत्यक्षे अन्तर्भावः अपि च सम्भवस्य अनुमाने । ऐतिह्यस्य प्रामाण्यं न विद्यते । अनुपपद्यमानस्य अर्थस्य दर्शनेन उपपादकार्थान्तरकल्पनं अर्थापत्तिरिति लक्षणं निरूपितम् । पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ दिवाभुञ्जानस्य पीनत्वमनुपपन्नमिति कृत्वा रात्रिभोजनं अर्थापत्तिप्रमाणेन निर्णीतम् । तत्र प्रत्यक्षैकप्रमाणवादिनां चार्वाकाणां अभिमतमयुक्तम् । सन्देह-विपर्ययज्ञानिराशकत्वात् । अतः एतदेव वक्तव्यं यत् "चार्वाक तवचार्वङ्गी इत्यादौ गले पादुकान्यायेन अनिच्छतापि चार्वाकेण अनुमानं स्वीकृतम् । संप्रति त्रीणि एव प्रमाणानि प्रधानतः स्वीकृतानि । तत्र पुनः शब्दस्यैव "रत्नालये रत्नम्" "हिमालये हिमम्" इत्यादि वत् अव्यभिचारित्वम् । दृश्यते, मायामुण्डदर्शनेनापि देवदत्तस्य इदं मस्तकम् इति भ्रमज्ञानं जायते । परन्तु सर्पदष्टे त्वयि विषं नास्तीति मन्त्रोच्चारणेन विषस्य अपाकरणं आप्तवाक्यबलेनैव सम्भवति । अतः एतदेव स्पष्टं यत् प्रथमे किरणे खलु शब्दप्रमाणस्य परं प्रामाण्यम् प्रतिपादितम्, विद्याभूषणपादैः "अनादिनिधना नित्या" इत्यादि श्रुतिमुख्येनेति ।

—o—

# द्वितीयः किरणः

अथ तावत प्रथमे किरणे प्रमाणनिरूपणानन्तरं द्वितीये किरणे प्रमेयाणि निर्णीयन्ते । प्रमेयाणि तावत् ईश्वर-जीव-प्रकृति-काल-कर्मभेदेन पञ्चधा । तथा च क्रमेण प्रथमतः ईश्वरस्य लक्षणं निरूपितम्-विभुः विज्ञानानन्दस्वरूपः सर्वज्ञादिगुणवान् पुरुषोत्तमः ईश्वरः इति । तथैव स कारण-कारणाधिपाधिपो", न चास्य कश्चित् जनिरस्ति लोके" इत्यादिभिः श्रुतिभिः सुसङ्गति जायते ।

"अजायमानो बहुधा विजायते" इत्यादिभिः श्रुतिभिः जन्मादिरहितस्य परमेश्वरस्य चाविर्भावमात्रत्वं बोध्यम् । तथैव ब्रह्मारुद्रप्रभृतीनां पारमैश्वर्यं प्रतिपादकानाम् श्रुतीनां तात्पर्यपर्यालोच्य "नारायणात् ब्रह्मा जायते, नारायणात् रुद्रो जायते" इत्यादिभिः बलवतीभिः श्रुतिप्रमाणैः तेषां पारमैश्वर्यखण्डनमुखेन विष्णो पारमैश्वर्यं प्रतिपादितम् । विष्णुपुराणे च "क्रोधाच्च रुद्रः" इत्यादौ नारायणस्य पारमैश्वर्यं वर्णितम् । श्रीवाराहे च "नारायणः परो देवस्तस्मात् जातश्चतुर्मुखः" इत्यादौ श्रीविष्णोरेव श्रेष्ठत्वं अभिहितम् । शिवस्य पशुपतित्वं च विष्णोः वरायत्त्वमिति श्रुतिसिद्धान्तः ।

गोवत्सहरणत्रिपुरासुरवधप्रसङ्गे च यथाक्रमं ब्रह्मारुद्रयोः विष्णुपरतन्त्रता श्रूयते । "नष्टे लोके द्विपरार्द्धावसाने" इत्यादौ देवकीस्तुतिमाध्यमेन भगवतः विष्णोः सर्वापेक्षया नित्यत्वम् प्रतिपादितम् । अर्थात एतदेवाभिहितं यत्—

"ब्रह्मादयः सुराः सर्वे विष्ण्वाराधनतत्पराः ।" यत्तु हरेः पुत्रलाभाय रुद्राराधनं श्रूयते तच्च लीलाकैवल्यम् । तस्य एव हरेः परा क्षेत्रज्ञा-माया-भेदेन त्रिधा शक्तयः । स एव सर्वशक्तिमान् परमेश्वरः स्व पराशक्तिबलेन जगतः निमित्तकारणम् । क्षेत्रज्ञादिशक्तिबलेन तदुपादानं च । तस्य एव आत्ममूर्त्तित्वं । देहदेहीभेदशून्यत्वात् ।

सत्यादिलक्षणं तावत् ब्रह्मसकाशात् अभिन्नमेव । ब्रह्मधर्माः ब्रह्मसकाशात् अभिन्नाः । "यथोदकं दुर्गवृष्टं" इत्यादिषु श्रुतिषु तदेव प्रमाणितम् । "सोऽकामयत बहुस्यां प्रजायेय" । "अहमात्मा गुडाकेशेत्यादिषु परमेश्वरस्य अस्मदर्थबोधं ग्राह्यम्" । अर्थात् तादृशस्य अहंप्रत्ययगोचरस्य परमात्मनः मुक्तोपसृप्यत्वं श्रुतिस्मृतिभिः प्रमाणितम् ।

"मामेव ये प्रपद्यन्ते

मायामेतां तरन्ति ते"

"निरञ्जनः परमसाम्यमुपैति धीरः" । इत्यादिभिः ।

स च पुरुषोत्तमः क्वचित् द्विभुजः, क्वचित् चतुर्भुजः क्वचित् अष्टभुजश्चेति पठ्यते । स्वरूपाभिन्नत्वेऽपि प्रकाशवैशिष्ट्यात्, भानतारतम्याच्च सूक्ष्मस्य माधुर्यातिशयत्वेन द्विभुजस्य एव प्राधान्यंच निर्णितम् ।

"शक्तेर्व्यक्तिस्तथाव्यक्तिः तारतम्यस्य कारणम्" । इत्यादिना । वह्निसकाशात् दाहिकाशक्तेः यथा अभिन्नत्वं, तथैव ब्रह्मसकाशात् ब्रह्मशक्तीनां अभेदत्वम् । "परास्य शक्तिर्विविधैव श्रूयते", इत्यादौ श्रीलक्ष्म्यादीनां तत् स्वरूपशक्तित्वमभिव्यक्तम् । तत्र सम्बित्‌शक्तिप्रधाना सरस्वती, ह्लादप्रधाना तु लक्ष्मी एव । अनयोः लक्ष्म्याः एव श्रेष्ठत्वं; ह्लादिनीशक्तिस्वरूपत्वात् । यथा विष्णोः पारतम्यं तथा लक्ष्म्याः अपि । तत्रैव च सर्वेषु लक्ष्मीरूपेषु श्रीराधायाः एव स्वयंलक्ष्मीत्वम्, यस्याः अंशे लक्ष्मीदुर्गादिका शक्तिरित्यादि श्रवणात् ।

—०—

## तृतीयः किरणः

तृतीये किरणे तावत् जीवस्वरूपं निरूपितम् । अणुचैतन्यरूपः भगवदंशो जीवः इति श्रुतिप्रमाणेन निर्द्धारितम् । पुनश्च भगवद्दासो जीवः इति निर्द्धारणेन जीव-ब्रह्मणोः भेदः, सेव्यसेवकसम्बन्धश्च स्वीकृतः । अतः एकजीववादः निरस्तः । अणुस्वरूपोऽपि जीवात्मा नित्यज्ञानगुणेन

समस्तशरीरावयवेषु व्याप्ततया तिष्ठति । यथा सूर्यः एकस्थानवत्त्र्यपि अखिल लोकं प्रकाशयति, तथा हृदयप्रदेशवृत्तित्वेऽपि जीवात्मनः ज्ञानगुणेन शरीर व्याप्यत्वेन स्थितिः । सोऽपि जीवः षड्भावविकाररहितः सन् कर्त्ता भोक्ता ज्ञाता च, सत्यमेतत निष्क्रियत्वश्रुत्या निर्विकारत्वश्रुत्या च जीवस्य कर्त्तृत्वं नैव बाध्यते । अस्ति भाति प्रभृतिभिः धात्वर्थैः तदुपपत्तेः । संयोगाश्रयत्वेऽपि आकाशस्य यथा न किमपि विकारवत्वम् तथा स्थूलक्रियाश्रयेऽपि जीवचैतन्येन विकृतिर्जायते ।

जीवोऽयं स्वरूपतः नित्यभगवद्दासः इति अभिधीयते । परन्तु वहिरङ्गाशक्त्या मायया तस्य स्वरूपं आवृत्तं भवति, शास्त्रोपदेशमाध्यमेन तदभिव्यक्तिर्भवति च । तच्च पुनः गुरुपादाश्रयमन्तरेण न सम्भवति । अस्मदप्रत्ययगोचरः जीवः एव न परमात्मा । न च परस्य ब्रह्मणः शास्त्रावाच्यत्वमिति शङ्कनीयम् । "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति श्रुतिवाक्येन तस्य कात्स्न्र्येन अगोचरत्वं पामरागोचरत्वं च विहितम् । "सर्वे वेदा यत् पदमामन्ति", वेदैश्च सर्वैरहमेव वेद्यः इत्यादिरूपेण बहुधा उक्तत्वात् ।

एतस्मिन् प्रसङ्गे च अद्वैतसिद्धान्तः निराकृतः । तत्र प्रतिविम्बवादोऽपि अपाकृतः, ब्रह्मणः निरूपत्वात् । तथा सति निरूपस्य वायुदिगादेः अपि तदापत्तिः । एवं च परिच्छिन्नवादोऽपि निरस्तः, जडया अविद्यया चैतन्यस्य परिच्छिन्नत्वासम्भवात् ।

अनेनैव विभिन्नाभिः शास्त्रयुक्तिभिः अद्वैतवादः खण्डितः । सत्यमेतत् अद्वैतवादे निराकृतेऽपि अद्वयतत्त्वं प्रतिपादितम् । जीवेश्वरयोः ईश्वरजडयोः भेदोऽपि वर्त्तते । तथापि शक्ति-शक्तिमतोः अभेदसम्बन्धदृष्ट्या अद्वयतत्त्वं सिध्यति इति दिक् ।

—*—

## चतुर्थः किरणः

अत्र तावत् चतुर्थकिरणे प्रकृतितत्त्वं निरूप्यते। तत्र सत्त्व-रजस्तमोऽभिधेयानां गुणत्रयाणां साम्यावस्थारूपजडद्रव्यविशेषः प्रकृतिः। सा प्रकृतिरेव उपादानकारणं जगतः। सा भगवतः बहिरङ्गाशक्तिविशेषरूपा प्रकृतिः गुणत्रयाणामाश्रयस्थली। इह त्रिविधानां गुणानां लक्षणं निरूपितम्। तत्र प्रकाशादिर्गुणः सत्त्वस्य । रागादिदुःखहेतुभूतं रजः। प्रमादालस्यादिहेतुत्वं च तमसः लक्षणम्। एतेषां साम्यावस्था प्रकृतिः। विषमावस्थया तु महदादिसृष्टिः। प्रकृतेः महत्तत्वं जायते। महत्तत्वात् अहङ्कारः। सः चाहङ्कारः त्रिविधः। सात्त्विकराजसिक-तामसिकभेदात्। तत्र सात्त्विकादहङ्कारात् मनसः इन्द्रियाधिष्ठात्रीणां देवतानाञ्च। राजसात् अहङ्कारात् इन्द्रियाणाम्। तामसात् अहङ्कारात् पञ्चतन्मात्राणाम् सृष्टिः। तन्मात्रेभ्यश्च पञ्चमहाभूतानामुत्पत्तिरिति विद्याभूषणपादानामभिमतम्। तत्रापि श्रुति-स्मृतिपुराणवचनं प्रमाणत्वेन निर्द्दिशितम्। चक्षुरादीनां बाह्येन्द्रियाणां लक्षणं निरूपितं पृथक्तया। पुनश्च तन्मात्राणि महाभूतानि च यथाक्रमं अविशेष-विशेष-शब्देन अभिधीयन्ते। अनन्तरं पञ्चीकरणप्रक्रिया प्रदर्शिता। अथ किं नाम पञ्चीकरणमिति चेदुच्यते "द्विधा विधाय चैकैकं

चतुर्द्धा प्रथमं पुनः
स्वस्वेतरद्वितीयांशैः
योजनात् पञ्च पञ्च ते। इति

एतेभ्यः पञ्चीकृतेभ्यः भूतेभ्यः चतुर्द्दशभुवनानां चतुर्विधशरीराणां चोत्पत्तिः। तत्र अष्टौ प्रकृतयः स्थूलशरीरस्योपादानरूपाः यदुक्तं भगवद्गीतासु।

भूमिरापोऽनलोवायुः खं मनोबुद्धिरेव च।
अहङ्कारः इतीयं मे भिन्नाः प्रकृतिरष्टधा॥

महदादीनि पृथिव्यन्तानि तत्त्वानि समष्टिरूपेण,पृथक्तया कार्याणि

१ व्यष्टिरूपेण उच्यन्ते । एवं च सर्वं सम्मिल्य चतुर्विंशति तत्त्वानि । अत्र दिक् पृथक् द्रव्यं न कल्प्यते । आकाशस्यैव तादृग्रूपतासिद्धेः ।

—०—

## पञ्चमः किरणः

कालतत्त्वं अत्र निरूपितमेव यत् त्रैगुण्यशून्यो जडद्रव्यविशेषः कालः । स च युगपत् अतीतादिरूपः सर्गप्रलययोः हेतुः । "न सोऽस्ति प्रत्ययः लोके यत्र कालो न भासते", इति न्यायेन कालस्य स्थितिः सर्वत्रैव विद्यते । सत्यमेतत्, सर्वेषां नियन्त्रकः कालः । परन्तु तस्य नियामकः परमात्मा एव । "ज्ञः कालकालो गुणी सर्वविद्यः" इत्युक्तत्वात् । परन्तु कालस्यैतस्य प्रभावः सर्वत्र विद्यमानेऽपि परंब्रह्मणः नाम धाम-लीला-परिकरादिषु नैव विद्यते ।

— ० —

## षष्ठः किरणः

कर्मतत्त्वं निरूपितं षष्ठकिरणे । क्रियारूपं कृतिसाध्यमदिति कर्मणः लक्षणम् । तच्च द्विविधम् । शुभाशुभभेदात् । तत्र वेदविहित शुभम् । वेद-विगर्हितं चाशुभम् । नित्य-नैमित्तिक-काम्यादि-भेदेन कर्म बहुधा विभक्तम् । परन्तु शुभाशुभात्मकमखिलं कर्म ज्ञानेन विनश्यति ।

"सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ।" इति गीता । कर्ममल-विनिवर्त्तकं ज्ञानं द्विविधम् परोक्षमपरोक्षं च । परोक्षं शास्त्रादिजन्यम् । अपरोक्षं च ह्लादिनीसारसंचितसम्वेतरूपम् । तादृगेव ज्ञानं भक्तियोगरित्यभिधीयते ।

परिशेषे चैवमभिधातव्यम् यत् आलोचितं तत्त्वपञ्चकं विष्णु-पुराणे विस्तृताकारेण वर्ण्यते । इति दिक् ।

—०—

# प्रथमः किरणः

"सनातनं रूपमिहोपदर्शयन्
आनन्दसिन्धुं परितः प्रवर्द्धयन्
अन्तस्तमस्तोमहरः स राजतां
चैतन्यरूपविधुरद्भूतोदयः ॥१

---

सौदामिनीव पीतदुकूलमम्बराढ्यं, सकीर्त्तनरसमयं करुणावतारम् ।
प्रेमाम्बुसिन्धुस्वरूपं शचीनन्दनाख्यं, वन्दे श्रीगौरकिशोरचरणारविन्दम् ॥१
अनन्तविश्वपरिणामहेतोः यस्यैव लीलाऽखिललोकजातम्,
यस्यैककारुण्यकटाक्षेणैव विधूतः मायाजनितश्च बन्धः ।
अचिन्त्यशक्तिधरशेषभूतं शरण्यमेकं भवदुःखभाजां,
भक्तैकलक्ष्यं श्रुतिसारवेद्यं गोविन्दमाद्यं पुरुषं प्रपद्ये ॥ २

इह अस्मिन्नेव कलौ सः अद्भुतप्रकाशः चैतन्यरूपचन्द्रः नित्यं विराजताम् । यः सर्वेश्वराख्यः प्रेमपुरुषोत्तमः श्रीराधाकृष्णमिलितविग्रहः कलिपावनावतारः स्वकीयं सनातनरूपं नित्यशाश्वतं श्रीधामनवद्वीपाविर्भावितं श्रीशचीनन्दनस्वरूपं सच्चिदानन्दविग्रहं प्रकटयन्, कलिहतजनानां अन्तस्तमःसमूहानां हरणकर्त्ता सन्, आब्रह्मस्तम्बपर्यन्तं प्राणीमात्राणां हृदये सर्वतोभावेन नामप्रेमानन्दसिन्धुं प्रवर्द्धयति स्म । अत्रापि सनातनादि-पदेन तस्य नित्यशाश्वतविग्रहवत्ता प्रतिपादिता इति ।

श्रीकृष्णपक्षेऽपि श्लोकस्यास्य अर्थः सङ्गच्छते । यथा सनातन-रूपं समुपदर्शयन् नित्यकिशोरस्वरूपं प्रदर्शयन् आनन्दसिन्धुं परितः प्रवर्द्धयन्, व्रजमण्डलादिषु नित्यानन्दं प्रकटयन् अनन्ताज्ञानसमूहस्य हरणकर्त्ता सन् चैतन्यरूपविधुः नित्यचिन्मयस्वरूपः श्रीकृष्णचन्द्रः राजताम् - विराजताम् । राजतामनेन तस्य नित्यम् अप्राकृतत्वं सिध्यति ॥ १

प्रमाणैर्विना प्रमेयसिद्धिः नैत्यतस्थानि तावन्नि-रूप्यन्ते–प्रत्यक्षमेकं चार्वाकः अनुमानञ्च वैशेषिकः, शब्दञ्च कपिलपतञ्जली, उपमानञ्च गौतमः, अर्थापत्त्यनुपलब्धी च मीमांसकः, ऐतिह्यसम्भवौ च पौराणिकः, इति तत्तन्निर्णयेषु पश्यामः। तदित्थं प्रत्यक्षानुमानशब्दोपमानार्थापत्त्यनुपलब्धिसम्भवैतिह्या-न्यष्टौ प्रमाणानि भवन्ति। ॥ २

---

प्रमाणैर्विनेति, प्रत्यक्षानुमानादीनि प्रमाणानि अनङ्गीकृत्य न प्रमेयसिद्धिः — घटपटादीनां प्रमेयपदार्थानां निर्णयः नैतत् भवति। माना-धीनामेयसिद्धिः प्रमाणाधीना प्रमेयसिद्धिरित्यर्थः। प्रत्यक्षमेकं चार्वाकः। तत्र केवलं प्रत्यक्षप्रमाणवादिनः चार्वाकाः इति भावः। अनुमानञ्च अर्थात् प्रत्यक्षमनुमान च वैशेषिकाः, न केवलं वैशेषिकाः, अपि तु बौद्धाः जैनाश्च। प्रमाण द्विविधं प्रत्यक्षानुमानभेदेन इति स्वीकुर्वन्ति। शब्दं च प्रत्यक्षा-नुमानशब्दं च कपिलपतञ्जली मन्येते।

त्रिविधं प्रमाणमिष्टं दृष्टमनुमानमाप्तवचनञ्चेति कारिकोक्तः प्रत्यक्षानुमानोपमानशब्दभेदेन प्रमाणं चतुर्विधमिति नैयायिकाः। "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि इति गौतमीय-न्यायसूत्रात्।

प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिरिति प्रमाणषट्कमङ्गीकृतं मीमांसकैः। पौराणिकाश्च सम्भवैतिह्यभेदेन प्रमाणद्वयेन सह प्रत्यक्षादि-प्रमाणषट्कं गृहीत्वा अष्टविधं प्रमाणमिति अङ्गीकुर्वन्ति। तदित्थं उप-र्युक्तप्रकारेण प्रत्यक्षादीनि अष्टसंख्यकानि प्रमाणानीति शास्त्रवि-दामभिमतम्। ॥ २

तेष्वर्थसन्निकृष्टमिन्द्रियं प्रत्यक्षम् । घटमहं चक्षुषा पश्यामीत्यादौ । अनुमितिकरणमनुमानम् । गिरिर्वह्निमान् धूमादित्यादौ । अग्न्यादिज्ञानमनुमितिः, तत्करणं धूमादिज्ञानम् । आप्तवाक्यं शब्दः, यथा नदीतीरे पञ्चवृक्षाः सन्ति । यथाचाग्निष्टोमेन यजेतेत्यादौ । उपमितिकरणमुपमानम् । गो सदृशो गवयः इत्यादौ संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः तत्करणं सादृश्यज्ञानम् ।

---

अर्थसन्निकृष्टमिन्द्रियं- अर्थं नाम घटपटादिविषयैं सह चक्षुरादीनामिन्द्रियाणां सन्निकर्षात् सम्बन्धवशात् यज्ज्ञानं, तदेव प्रत्यक्षम् । अक्षम् इन्द्रियम् । इन्द्रियजन्यं ज्ञानं प्रत्यक्षमिति भावः । "इन्द्रियजन्यं ज्ञानं प्रत्यक्षम्" इति विश्वनाथतर्कपञ्चाननः । अतः प्रत्यक्षज्ञानविषये इन्द्रियं करणम् । व्यापारश्च सन्निकर्षः । अर्थात् इन्द्रियमाध्यमेन सन्निकर्षजनितं ज्ञानम् प्रत्यक्षम् ।

अनुमानं लक्षयति—अनुमितिकरणमिति । व्याप्तिविशिष्टपक्षधर्मताज्ञानंपरामर्शस्तज्जन्यज्ञानमनुमितिः । अनुमितिकरणमनुमानं अत्र व्याप्तिज्ञानं करणम् । परामर्शश्च व्यापारः । अर्थात् यत्र यत्र धूमः तत्र तत्र वह्निः । यत्र वह्निर्नास्ति तत्र धूमो नास्ति इति अन्वयव्यतिरेकाभ्यां व्याप्यव्यापकसम्बन्धजन्यज्ञानमनुमानमित्यर्थः ।

शब्दप्रमाणं लक्षयति— आप्तवाक्यमिति आप्तवाक्यं शब्दप्रमाणम् । "आप्तोपदेशः शब्दः" इति न्यायसूत्रम् । 'न हि भूतादिविषयस्य कश्चिदस्ति विधायकः" यतः भूतादिविषयाणां अतीतादिविषयाणां प्रमाणनिमित्तं वेदवाक्यानामावश्यकता । तथा च शाबरभाष्येऽपि 'चोदना हि भूतं भवन्तं भविष्यन्तं विप्रकृष्टमिति एवंजातीयकमर्थं शक्नोत्यवगमयितुम् । अर्थात् शास्त्रस्य परं प्रामाण्यं सिद्धमित्यर्थः ।

अनुपपद्यमानार्थदर्शनेनोपपादकार्थान्तरकल्पनमर्थापत्तिः पीनो देवदत्तो दिवा न भुंक्ते इत्यादौ, इह दिवा अभुञ्जानस्य पीनत्वमनुपपन्नं सत्तस्य नक्तं भोजित्व गमयति घटाद्यनुपलब्ध्या घटाद्यभावः निश्चितः। अनुपलब्धिरुपलब्धेरभावः इत्यभावेन प्रमाणेन घटाद्यभावो गृह्यते। शते दशकं सम्भवतीति बुद्धौ सम्भावनं सम्भवः ।

---

उपमान-प्रमाणं दर्शयति— उपमितिकरणमिति । गो सदृशो गवयः इत्यादौ । गो सदृशो गवय इत्यादौ, उपमाने प्रमाणे सादृश्यज्ञानं करणम् । व्यापारश्च तत्र अतिदेशवाक्यार्थस्मरणम् तत्र किं नाम सदृशत्वमिति आकाङ्क्षायाम् — तद् भिन्नत्वे सति तदगत भूयोधर्मवत्त्वम्, सदृशत्वम । 'गो सदृश गवयः'' इति आरण्यकपुरुषवचनात् गवयपिण्डदर्शनेन अयं गवयः गोः सदृशत्वात् इति यज् ज्ञानं तदेवोपमानप्रमाणम् । अतो संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिरित्यर्थः ।

अर्थापत्तिप्रमाणं लक्षयति— अनुपपद्यमानेति अनुपपद्यमानस्य-उपपत्तिरहितस्य अर्थस्य दर्शनेन तदुपपादयितुमर्थान्तरस्य परिकल्पनं यत् क्रियते तत् अर्थापत्तिर्नाम प्रमाणम् । पीनो देवदत्त. दिवा न भुंक्ते। इत्यत्र दिवा अभोजिनः देवदत्तस्य पीनत्वं रात्रिभोजनं गमयति इति अर्थापत्तिप्रमाणम् ।

अभावं प्रमाणं लक्षयति—घटाद्यनुपलब्ध्येति । अनुपलब्धिरुपलब्धेरभावः । घटादीनामनुपलब्ध्या तेषामभावः गृह्यते । अतः अभावस्यापि प्रामाण्यमिति केचन मीमांसकाः ।

अनन्तरं सम्भवं प्रमाणं लक्षयति—शतेति शतसंख्यके दशसंख्यकः परिमाणः नूनमेव वर्तते इति बुद्धौ यत् सम्भावनं तत् सम्भवं प्रमाणम् ।

अज्ञातवक्तृकतागतपारम्पर्यप्रसिद्धमैतिह्यं, यथेह वटे यक्षो निवसतीत्यादौ। अङ्गुल्युतोलनतो घट-दशका-दिज्ञानकरी चेष्टापि, कैश्चिन्मानमिष्यते, एवं प्रमाण-वादिनो विविधाः॥ ३

तेषु प्रत्यक्षमात्रवादिना चार्वाकेणाप्रतिपन्नः सन्दिग्धो विपर्य्यस्तो वा पुमान् न शक्यो व्युत्पादयितुम। न चार्वाग-दृशा प्रत्यक्षेण पुरुषान्तरवर्तिनोऽज्ञानसन्देहविपर्ययाः शक्याः प्रतिपत्तुम्। न चानवधृतपरगताज्ञानादिर्वक्तुं प्रवृत्तो ग्राह्यवाक् प्रेक्षावताम्। ४

---

ऐतिह्यं प्रमाणं निरूपयति— अज्ञातेति। अज्ञातवक्तृक पुरुषेण परम्परया-गतं प्रसिद्धि तथ्यं ऐतिह्यं प्रमाणम्।

चेष्टाप्रमाणं लक्षयति— अङ्गुल्युत्तोलनतोऽभीष्टज्ञानकर्मादि-सिध्यर्थं हस्तपदादिचालना चेष्टा। सापि चेष्टा मानं प्रमाणमिष्यते कैश्चित्। उक्तं च प्रमेयरत्नावल्याम्—

प्रत्यक्षमेकं चार्वाकाः कणादसुगतौ पुनः।
अनुमानं च तच्चापि सांख्याः शब्दं च ते उभे॥
न्यायैकदेशिनोऽप्येवमुपमानञ्च केचनः।
अर्थापत्त्यासहैतानि चत्वार्याहुः प्राभाकराः॥
अभावः षष्ठान्येतानि भाट्टा वेदान्तिनस्तथा।
सम्भवैतिह्ययुक्तानि तानि पौराणिकाः जगुः। इति॥

प्रत्यक्षमात्रप्रमाणवादिनां चार्वाकाणां अप्रतिपन्नत्वं प्रदर्शयति। प्रत्यक्षवादी चार्वाकः केवलं प्रत्यक्षप्रमाणबलेन पुरुषोऽयं अज्ञः, सन्दिग्धो, विपर्य्यस्तः, भ्रान्तो वा पुमान् शक्यो व्युत्पादयितुम्, प्रतिपादयितुं समर्थोः न भवति। पुनश्च पुरुषान्तरस्थं अज्ञानं, सन्देहं, भ्रमं च न ज्ञातुं पारयति। अतो ईदृशस्य परहृदयगताज्ञानाद्यवगन्तुमसमर्थस्य चार्वाकस्य प्रत्यक्षप्रमाणरूपं वचनं कथं विज्ञजनैः गृह्यते? न गृह्यते इति भावः। ४

तस्मादनिच्छतापि तेन अनुमानमुपादेयमेव । अतः स परिहस्यते ।

चार्वाक तव चार्वङ्गीं जारतो वीक्ष्य-गर्भिणीम्

प्रत्यक्षमेव विश्वासः किमुज्झसि दीर्घश्वासम् ।

तेन च परमताज्ञानादीनभिप्रायभेदाद वाक्यभेदाल्लिङ्गादनुमाय तदज्ञानादिपरिहारे प्रवृत्तो ग्राह्यवाक् स्यादिति । ५

यत्तु–शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते

अनुमाने गतार्थत्वादिति वैशेषिकं मतम् ।

इत्याहुस्तन्मन्दम् । ग्रहचेष्टादावनुमानाप्रवृत्तेः । विशेषस्तूपरिवदिष्यामः । तदेव प्रत्यक्षानुमानशब्दाः प्रमाणानीति वृद्धाः । उपमानादिनामेष्वन्तर्भावात् पृथक्प्रमाणतानेत्याहुरिति । ६

---

चार्वाक तव चार्वङ्गीं इत्यादौ अनिच्छतापि चार्वाकेण गले पादुका-न्यायेन अनुमानं स्वीकर्त्तव्यम् । अन्यथा मम माता वन्ध्येति वत् व्याघातापातः । तेन चार्वाकेण पराभिमतलिङ्गज्ञानमन्तरेण परपक्ष खण्डयितुं न शक्यते । अतो अनिच्छतापि चार्वाकेण अनुमानं ग्राह्यम् । ५

शब्दोपमानयोः अनुमाने गतार्थत्वं खण्डयति यत्तु इतिः—

वैशेषिकाणां मते शब्दप्रमाणस्य उपमानप्रमाणस्यापि नैव पृथक्प्रामाण्यं स्वीकृतम् । अनुमानप्रमाणे गतार्थत्वात् । तन्मन्दम्–न समीचीनम् वृद्धैः ज्ञानिभिः प्रमाणत्रयं प्रत्यक्षानुमानशब्दाभिधेयं प्रमाणं त्रिविधमिति स्वीकृतत् । प्रत्यक्षानुमानशब्दाः प्रमाणानि इति वचनात् ।

उपमानादिप्रमाणानां प्रत्यक्षानुमानशब्दप्रमाणान्तर्भावात् उपमानय पृथक्-प्रामण्यं न गृह्येत, परन्तु शब्दप्रमाणस्य स्वतन्त्रप्रामाण्यं मवश्यं स्वीकार्य प्रमाणमूर्द्धण्यात्, "श्रुतेस्तु शब्दमूलत्वात्" इति न्यायात् ॥ ६ ।

तथाहि उपमानं खलु यथा गौ स्तथा गवयः, इति वाक्यं तज्जनिता च धीरागम एव, गवयशब्दो गोसदृशस्याभिधायीति यः प्रत्ययः सोऽप्यनुमानमेव । यः शब्दो वृद्धैः यत्रार्थे प्रयुज्यते सोऽसतिवृत्त्यन्तरे तस्याभिधायी, यथा गोशब्दः गोत्वस्य । प्रयुज्यते च गोः सदृशो गवयशब्दः इति तस्यैव योऽभिधायीति ज्ञानमनुमानमेव । यत्तु चक्षुःसन्निकृष्टस्य गवयस्य गोसादृश्यज्ञानं, तत्-प्रत्यक्षमेवेति नोपमानं पृथग्वाच्यम् । ७

यत्तु दिवा अभुञ्जाने पीनत्वं नक्तं भुक्ति विना नोपपद्यते, अतः पीनत्वान्यथानुपपत्तिप्रसूतार्थापत्तिरेव रात्रि-

---

उपमानं प्रमाणं अनुमाने अन्तर्भावयति । — तथा हीतिवउपमाने प्रमाणे यथा गौः तथा गवयः इत्येवंजातीयकं ज्ञानम् नानुमानादतिरिच्यते । गवयशब्दः गोसादृश्यस्यैवाभिधायि । अर्थात् यत्र यत्र गोः सदृशत्वम् तत्र तत्र गवयत्वम्, इति सादृश्यज्ञानानन्तरं यदा गवयपिण्डस्य प्रत्यक्षं भवति, तदा आरण्यकपुरुषवचनस्मरणेन अयं गवयः गोः सदृश्यदर्शनात् इति ज्ञानम् स्यात् । यतो हि यत्र यत्र धूमः, तत्र तत्र वह्निरिति वह्निधूमयोः साहचर्यमस्माभिः बहुवारं प्रत्यक्षीकृतम् । तस्मात् धूमदर्शनेन वह्निज्ञानं सहसैव जायते । तद्वदेव यत्र यत्र गोः सादृश्यं तत्र तत्र गवयत्वं इति प्रागेव ज्ञातत्वात् गवयपिण्डस्य दर्शनमात्रेण "अयं गवयः इति यज् ज्ञानं तत् खलु नानुमानादतिरिच्यते । केचनः वदन्ति उपमान प्रत्यक्षमेव गोसदृशगवयपिण्डदर्शनेन गवयज्ञानात् । ७

अर्थापत्तेः पृथक्प्रामाण्यं निराकरोति । यत्तु इति । पीनः देवदत्तः दिवा न भुंक्ते इत्यत्रापि न पृथक्प्रमाणस्यावश्यकता । तत्रापि पञ्चावयववाक्यस्य प्रयुक्तेन अनुमानान्तर्गतत्वात् । तत्र किं नाम पञ्चावयवत्वमिति चेत् — उच्यते ।

भोजने प्रमाणम्, इति तन्न । तस्यानुमानान्तर्भावात् । अयं रात्रौ न भुंक्ते न सः दिवाऽभुञ्जानत्वे सति पीनः । यथा दिवारात्रौ अभुञ्जानोऽपीनः (व्रती) ।

न चायं तथा, तस्मात् तथेति

केवलव्यतिरेकानुमानगम्यमेतत् । ८

---

तत्र प्रतिज्ञा-हेतूदाहरणोपनयनिगमनानि पञ्चावयवाः । पर्वतो वह्निमानिति प्रतिज्ञा ।

धूमवत्त्वात् इति हेतुः नाम साधनम्, यो यो धूमवान् सः सः वह्निमान्, यथा महानसः इति उदाहरणम् । महानसे वह्निधूमयोः साहचर्यं प्रत्यक्षीकृतत्वात् ।

तथा चायम् । अर्थात् यथा महानसे धूमो वर्तते वह्निरपि वर्तते, तथा अत्रापि पर्वते धूमः वर्तते तस्मात् तथा-निगमनम् । तस्मात्-धूमसद्भावात् तथा वह्निमानयं पर्वतः इति । एवमपि पीनो देवदत्तः दिवा न भुंक्ते इत्यत्रापि अनुमानस्य प्रवृत्तिः ।

१- अयं रात्रौ न भुङ्क्ते । इति प्रतिज्ञावाक्यम् ।

२- दिवाऽभुञ्जानत्वे सति पीनत्वात् - हेतुः

३- यस्तु रात्रौ न भुङ्क्ते न स दिवाऽभुञ्जानत्वे सति पीनः । —इति उदाहरणम् ।

४- यथा दिवारात्रौ अभुञ्जानोऽपीनः व्रती) इति उपनयः न चायं तथा-

५- तस्मात् तथा - दिवाऽभुञ्जानत्वे सति अपीनः इति केवलव्यतिरेकानुमानमेतत् ।

किं नाम व्यतिरेकानुमानम् इति चेत् उच्यते केवलव्यतिरेकिणः लक्षणं निरूपितम् अन्नम्भट्टेन ।

यत् व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकीति ।

यथा पृथिवीतरेभ्यो भिद्यते,गन्धवत्त्वात् ।

यदितरेभ्यः न भिद्यते, न तद्गन्धवत् ।

यथा जलम् । नचेयं तथा तस्मान्न तथेति । अत्र यत् गन्धवत् तदितरभिन्नमित्यन्वयदृष्टान्तः नास्ति पृथिवीमात्रस्य पक्षत्वात् । पीनो देवदत्तः दिवा न भुंक्ते इत्यत्र तादृशं केवल व्यतिरेकानुमानम् ।

अनुपलब्धिश्च न पृथक्प्रमाणम् । घटाद्यभावस्य चाक्षुषत्वादभावं प्रकाशयेन्द्रियं स्वयं बद्धभावविशेषणमुखेनेति नाप्रसङ्गः । सम्भवं तु शते दशकाद्यवगमः, सचानुमानमेव । शतत्वं हि दशकाद्यविनाभूतं, शते दशकादिसत्त्वमवगमयतीति । ऐतिह्यं वनिर्द्धिष्टवक्तृकत्वेन सांशयिकत्वात् न प्रमाणम् । आप्तवक्तृकत्वे निश्चिते तु तस्यागमान्तर्भाव एवेति त्रीण्येव प्रमाणानि । यथा—

---

अनुपलब्धेः पृथक्प्रामाण्यं निवारयति। अनुपलब्धिश्चेति । अनुपलब्धेः, अभावस्य न पृथक् प्रामाण्यम् । अभावस्यापि प्रत्यक्षप्रमाणान्तर्गतत्वात् । "येनेन्द्रियेण यदेव गृह्यते, तेनेन्द्रियेण तद्गता जातिः तस्याभावश्च गृह्यते। विशेषण-विशेभावसन्निकर्षेण घटाभाववत् भूतलमिति अभावस्य चाक्षुषप्रत्यक्षत्वात् ।

सम्भवं प्रमाणं अनुमाने अन्तर्भावयति—शते दशकं सम्भवति। उभयोः अविनाभावसम्बन्धवशात् । अविनाभावसम्बन्धः नाम तादात्म्यसम्बन्धः । किं नाम तादात्म्यमिति चेत्—भेद सहिष्णुः अभेदसम्बन्धः इति ।.अत्यन्त भेदे सति न तादात्म्यम । यथा— अश्वत्वगोत्वयोः । अत्यन्तमभेदे सति न तादात्म्यम् यथा— घटत्व कलशत्वयोः । भेद—सहिष्णुः अभेदः एव तादात्म्यसम्बन्धः । यथा शिंशपात्व-वृक्षत्वयोः, शिंशपात्वं वृक्षत्वमतिरिच्य स्थातुं न शक्नोति । तद्वत् शतत्वं दशकत्वमतिरिच्य न सम्भवितुमर्हति । ऐतिह्यस्य प्रामाण्यं निराकरोति-ऐतिह्ययनिर्दिष्टं इति । अज्ञातपुरुषवक्तृकत्वात् तादृशं ज्ञानं सांशयिकम् । परन्तु प्रमाण नाम यथार्थानुभवः, 'यथार्थानुभवः प्रमा' इति केशवस्वामिनोक्तत्वात् । यथार्थ इत्यनेन अयथार्थानां संशय विपर्यय--तर्कज्ञानानां प्रामाण्यं निरस्तम् ।

प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम्
त्रयं सुविदितं कार्यं धर्मशुद्धिमभिप्सता । ६ ।

तत्र प्रत्यक्षं स्थूलमेव सन्निकृष्टं गृह्णाति । नातिदूरं; न चाति समीपं । यथा खमुत्पतन्तं पक्षिणं, यथा च नेत्रस्थमञ्जनम् । मनस्यनवस्थिते स्थूलमपि तन्न गृह्णाति यदुक्तं मे मनोऽन्यत्र गतं, मया न दृष्टमित्यादि ।

---

स्मृतिशास्त्रे चोक्तमस्ति धर्मशुद्धिमभीप्सता पुरुषेण प्रमाणत्रयमङ्गीकर्त्तव्यम् । प्रत्यक्षानुमानागमाः प्रमाणानीति । ६

प्रत्यक्षप्रमाणे दोषं दर्शयन्ति, केवलं स्थूलमेव वस्तु प्रत्यक्षेण गृह्यते । कुत्रचित् च स्थले सतामपि वस्तूनां प्रत्यक्षं न भवति । तत्र त्रिविधं कारणं निर्द्धेशितम्—

अतिदूरादतिसामीप्यात्
इन्द्रियघातात् मनोऽनवस्थानात्
सौक्ष्म्यात् व्यवधानात्
अभिभवात् समानाभिहाराच्च ।

प्रथमं अतिदूरात् तावत् सत्तामपि वस्तूनामनुपलब्धिः । यथा बहुदूरे आकाशे उड्डीयमानानां पक्षिणाम् । अतिसमीपवर्त्तिरपि वस्तु प्रत्यक्षेण ग्रहीतुं न शक्यते यथा नेत्रस्थमञ्जनम् ।

इन्द्रियविकलवशादपि सतः वस्तुनः प्रत्यक्षज्ञानं न भवति । यथा अन्धः किमपि द्रष्टुं न शक्नोति । मनसि अनवस्थिते सति सत्यपि वस्तुनि तद्विषये ज्ञानं न सम्भवति । आत्मा मनसा संयुज्यते । मनः इन्द्रियेण । इन्द्रियमर्थेन । तदन्तरं ज्ञानम् इति न्यायभाष्यकारेण वात्स्यायनेनोक्तत्वात् वस्तूनां सौक्ष्म्यादपि कुत्रचित् च स्थले तस्मिन् विषये प्रत्यक्षज्ञानं न सम्भवति । यथा परमाणूनाम् । व्यवधानं वर्त्तते चेत्

अभिभूतमनुद्भुतं च संम्पृक्तमतिसूक्ष्मं च तन्न गृह्णाति यथा रविकिरणाभिभूतं ग्रहनक्षत्रमण्डलम् । यथा क्षीरे दधिभावम् । यथा च जलाशये जलद-विमुक्तान् जलविन्दून् यथा परमाणुमित्यादि । १०

प्रत्यक्षं सन्निकृष्टमपि क्वचित् व्यभिचरति चैतत् । मायामूर्द्धावलोके यज्ञदत्तस्यैवायं मूर्द्धेत्यादौ । यद्यप्यप्रत्यक्षेऽपि वस्तुनि लिङ्गादनुमानं प्रवर्त्तयितुमलं, तथापि तत् क्वचिद्व्यभिचारदृष्टम् । वृष्टया निर्वापिते तत्काले वह्नौ चिरमधिकोदित्वरधूमे-पर्वतो वह्निमान् इत्यादौ ।११

यदेवं मुख्ययोरनयोः व्यभिचारित्वात् तदन्येषामनुतदुपजीविनां सुसिद्धमेव तत् । आप्तवाक्यलक्षणः

---

सतः वस्तुनोऽपि प्रत्यक्षं न भवितुमर्हति । यथा— एकस्याः भित्तिकायाः एकपार्श्ववर्त्तिनः जनस्य अपरपार्श्वे स्थितस्य पदार्थस्यविषये प्रत्यक्षज्ञानं न सम्भवति । तथा च अभिभूततया च वस्तुनः प्रत्यक्षत्व न भवितुमर्हति । यथा रविकिरणाभिभूतानां ग्रह-नक्षत्रमण्डलानाम् । समानाभिहारादपि सतः अपि वस्तुनः न प्रत्यक्षज्ञानम् । यथा पुष्करिण्यां जलबिन्दूनाम् । १०

प्रत्यक्षस्य व्यभिचारमपि दर्शयति—प्रत्यक्षमिति । मायामस्तकावलोकने तच्च कस्यचित् निर्दिष्टस्य व्यक्तेः मस्तकमिति ज्ञानं प्रत्यक्षप्रमाणेन ज्ञायते । परन्तु तादृशं ज्ञानं भ्रमरूपमेव । केनचित् मायाविना मायामस्तकदर्शितत्वात् ।

अनुमानस्यापि व्यभिचारं दर्शयति—वृष्ट्यनन्तरं निर्वापिते वह्नौ अधिकपरिमाणधूमः निःसरति । तदानीं धूमदर्शनेन वह्निमनुमातुं कस्यचित् प्रवृत्तिः चेत् सुतरां निरर्थकमेव । वह्न्यभावेऽपि धूमदर्शनात् । ११

आप्तवाक्यस्य प्रामाण्यं निरूपयति यदेवमिति — मुख्ययोरनयोः प्रत्यक्षानुमानयोः व्यभिचारित्वात् दोषदृष्टत्वात् अन्येषां तदुपजीवीनां

शब्दस्तु कुत्रापि न व्यभिचरति । हिमालये हिमं, रत्नालये रत्नमित्यादि । रविकान्ताद्रविकरसंयोगेन वह्निरुत्तिष्टतीत्यादि । सः खलु तन्निरपेक्षस्तदुपमर्दितदविरोध्य स्तत् सविवस्तदनुग्राहीतदगम्यसाधकतमश्च दृष्टः । १२

तथाहि दशमस्त्वमसीत्यादौ तन्निरपेक्षः स एव शब्दः स्रोत्रं प्रविशन्नेव दशमोस्मीति प्रमायास्तिरस्कारिणं मोहं विनिवर्त्तयतीति तत्त्वं स्पष्टम् । १३

सर्पदंष्टे त्वयि विषं नास्तीति, मन्त्रः इत्यादौ, वह्नितप्तमङ्गं वह्नितापेन शाम्यतीत्यादौ च तदुपमर्दकत्वं सौवर्णम्भसितं स्निग्धमित्यादौ, एकमेवौषधं त्रिदोषघ्नमित्यादौ च स्वप्रतिपादिते ताभ्यामविरोध त्वञ्च । अग्नि हिमस्य भेषजमित्यादौ । होरकगुणविशेषमदृष्टवद्भिः पार्थिवत्वेन सर्वपाषाणादिद्रव्यं लौहच्छेद्यमिति अनुमातुं शक्यं न तु श्रुततादृशगुणकं हीरकं तच्छेद्यमित्यादौ च यथाशक्ति ताभ्यां साचिव्यकरणम् । दृष्टचरमायामूर्ध्नः पुरुषस्य भ्रात्याप्यविश्वस्ते स एवायमित्याकाशवाण्यादौ, लौहच्छेद्यम् पाषाणादौ, अरे शीतार्त्ता पान्थाः मास्मिन् वह्नि सम्भावयत

उपमानादीनां सुसिद्धमेव तत् व्यभिचारित्वम् । आप्तवाक्यलक्षणः शब्दः आप्तोपदेशजनितं शब्दप्रमाणं कुत्रापि न व्यभिचरति । हिमालये हिमं रत्नालये रत्नामितिवत् अव्यभिचारं शास्त्रप्रमाणम् । १२

शब्दप्रमाणस्य याथार्थ्यं निरूपयति — दशमस्त्वमसीत्यदिश्रुत्या । अहम् दशमः अस्मि इत्याद्यनुभवः जायते । अर्थात् निरपेक्षं प्रमाणं शब्दः इति भावः । १३

शब्दप्रमाणस्य पारतम्यं अभ्रान्तत्वं च प्रदर्शयति—सर्पदंष्टेति । सर्पदंशितेऽपि पुरुषे त्वयि विषं नास्तीति मन्त्रवचनेन सर्वविषमपगच्छति ।

दृष्टमस्माभिरत्रासौ वृष्ट्याधुनैव निर्वाणः किन्त्वस्मिन् धूमोद्गारिणि गिरौ सोऽस्तीति, तेनैव ते बद्धमूले प्रतीतेः तच्छक्तुकवत्यगम्ये साधकतमत्वञ्च, ग्रहाणां राशिसंचारे सूर्यपरागादौ च । १४

तदेवं सर्वतः श्रेष्ठे शब्दस्य स्थिते तत्त्वनिर्णायकस्तु श्रुतिलक्षण एव न त्वार्षलक्षणोऽपि "नावेदविद्मनुते तं, बृहन्तमौपनिषदं पुरुषं पृच्छामीत्यादि" श्रुतिभ्यः ऋषीणां मिथो विवाददर्शनेन तद्वाक्यानां तन्निर्णायकत्वासम्भवात्, नित्यः श्रुतिशब्दः "वाचा विरूप नित्ययेति श्रवणात्"

अनादि निधना नित्या वागुत्सृष्टा स्वयंम्भुवा
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ।

---

इत्यादौ च । सौवर्णम्भस्मितं सिध्यमित्यादौ कस्यापि प्रत्यक्षादिप्रमाण-विषये नास्ति विरोधः । १४

निष्कर्ष विदधाति — तदेवमिति शब्दप्रमाणस्य निर्दुष्टत्वात् दृढतायां सिद्धौ तत्त्वनिर्णयाय = यथार्थवस्तुतत्त्वविवेकाय तदेव श्रुतिप्रमाणं सिद्धम् । न पुनः आर्षलक्षणः शब्दः "नावेदविद्मनुते" इत्यस्य श्रुति-वाक्यस्याभिप्रायस्तावत् वेदार्थतत्त्वविषये अज्ञः पुरुषः परंब्रह्मतत्त्वं ज्ञातुं न शक्नोति । "औपनिषदं पुरुषं पृच्छामि" इत्यपि वाक्यंपरंब्रह्मज्ञान-निमित्तं श्रुतिरेव प्रमाणमिति चोदयति । ऋषीणां च परस्परं विवाद-दर्शनेन श्रुतिव्यतिरिक्तमन्यत् किमपि अभ्रान्तं प्रमाणं भवितुं नार्हति । श्रुतिप्रमाणस्य नित्यत्वं दर्शयति । - यदुक्तं वाक्यपदीये — अनादिनिधना वाक् - या खलु सदैव नित्या सा वेदमयी श्रुतिरूपिणी दिव्यवाणी स्वयंभुवा = ब्रह्मणा उत्सृष्टा नाम प्रकाशिता । उत्सृष्टा इति कथनेन

इत्यादि स्मरणाच्च भ्रमादिदोषविशिष्टजीवकर्त्तृकत्वविरहात् निर्दोषश्च स एव भवतीति । १५

इति वेदान्तस्यमन्तके प्रमाण निर्णयः प्रथमकिरणः ।

---

शब्दस्य नित्यत्वं स्वीकृतम् । यतः = यस्मात् सकाशात् सर्वाः प्रवृत्तयः अखिलशास्त्रविषयाः प्रवर्त्तन्ते ।

श्रुतिप्रमाणस्य दोषरहितत्वं व्यवस्थापयति । साधारण पुरुष भ्रम-प्रमाद विप्रलिप्सा-करणापाटवाः चत्वारः दोषाः सन्ति । यदि वेदः पुरुषकर्त्तृकः स्यात् तर्हि वेदेऽपि तादृशाः दोषाः सम्भाव्यन्ते । परन्तु सर्वथा वेदस्य दोषरहितत्वात् न सः जीवकर्त्तृकः इति दिक् । अतः वेदस्य प्रामाण्यमूर्धन्यत्वम् निर्णीतम् । १५

—0—

# द्वितीयः किरणः

अथ प्रमेयाणि निर्णीयन्ते । तानि च पञ्चधा । ईश्वर-जीव-प्रकृति-काल-कर्मभेदात् । तत्र "विभुः" विज्ञानानन्दः सर्वज्ञादिगुणवान् पुरुषोत्तमः ईश्वरः । "विज्ञानमानन्दं ब्रह्म," "सत्यं ज्ञानमनन्तं ब्रह्म" "यः सर्वज्ञः सर्ववित्" सत्यकामः, सत्यसंकल्पः," स उत्तमः पुरुषः इत्यादि-श्रवणात् ।

स च सर्वेषां स्वामी, जनिविनाशशून्यः, "तमीश्वराणां परमं महेश्वरम्" तं दैवतानां परमं च

---

अथ प्रमाणनिरूपणानन्तरं प्रमेयाणि प्रतिपाद्याः पदार्थाः निर्णीयन्ते । प्रमेयपञ्चकं नामतो— जीवः, ईश्वरः, प्रकृतिः-कालः-कर्मेति— ईश्वरं लक्षयति विभ्विति । विभुः, सर्वत्र परिव्याप्तः, श्रुतिश्च चोदयति—

(१) "ईशावास्यमिदं सर्वं यत् किञ्चित् जगत्यां जगत् ।"

विज्ञानानन्दः – विज्ञानस्वरूप (२) "अन्यतरः आत्मा विज्ञानमयः" तस्मात् वा एतस्मात् विज्ञानमयात् इति श्रुतिसिद्धत्वात् । परंब्रह्मणः आनन्दमयत्वमपि श्रुतिः प्रतिपादयति । "विज्ञानमानन्दं ब्रह्म ।" "आनन्दात् खलु इमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्ति, आनन्दं अभिसंविशन्ति, तद् आनन्दं ब्रह्मेति विजिज्ञासस्व ।" आनन्दं ब्रह्मेति व्यजानात् । आनन्दं ब्रह्मेति विद्वान् न बिभेति कुतश्चन । इत्यादि श्रुतौ ब्रह्मणः आनन्दमयत्वं उक्तम् ।

सर्वज्ञादिगुणवान्, सर्वं जानाति इति सर्वज्ञः, आदिपदेन सर्वशक्तिमत्त्वम्, सर्वद्रष्टृत्वं, सर्वनियन्तृत्वमित्यादयः गुणाः श्रूयन्ते । "स सर्वशक्तिमान्, सर्वद्रष्टा, सर्वनियन्ता सर्वकामः, सर्वरसः इति श्रुतिप्रमाणात् ।

दैवतम्"। पतिं पतीनां परमं परस्तात् विदाम देवं भुवनेशमीड्यम्। सकारणानां कारणाधिपाधिपो,नचास्य कश्चित् जनिता नचाधिप इति च श्रवणात्। १

तस्यैवंभूतस्य क्वचित् जन्मत्वहीनः स्वरूपस्वभावस्याविर्भावमात्रम् बोध्यम्। अजायमानो वहुधा विजायते। इति श्रुतेः।

---

परंब्रह्मणः सर्वश्रेष्टत्वं दर्शयति — स चेति। स च परमात्मा सर्वेषां, विविधस्थावरजङ्गमानां प्राणीनां स्वामी पालकः नियन्ता च। जनिविनाशशून्यः, उत्पत्तिविनाशरहितः। आत्मा च षड्भावविकारहितेति श्रुतिः दर्शयति।

षड्भावविकाश्च यास्केन चउक्तम् जायते, अस्ति, वर्द्धते, विपरिणमते, अपक्षीयते, नश्यति इति। "अविनाशी वारे अयमात्मा अनुच्छित्तिधर्मा इति श्रुतिप्रामाण्यात्, ईश्वराणां, ब्रह्मरुद्रेन्द्रप्रभृतीनां सुराणां परमम्, उपास्यत्वेन सर्वश्रेष्टः, पतीनां, प्रजापतीनां पति। परमं परस्तात्, सर्वस्मात् श्रेष्टमित्यर्थ, भुवनेशं, भुवनानां नियन्तारम्, ईड्यम्, स्तुत्यम्, विदामः, अन्यन्यया भक्त्या साक्षात् करवामः इति भावः। सः परमात्मा कारणानां कारणं नाम सर्वेषां सृष्टिकर्त्ता मूलकारणमिति भावः। न चास्य परमात्मनः कश्चित् जनिता, सृष्टिकर्त्तास्रष्टेति भावः। १

ननु नित्यस्य परमात्मनः यशोदानन्दन-दशरथनन्दनादिकमभिधानं कथं युज्यते इति चेत् समादधाति तस्यैवेति। तस्य जनिविनाशशून्यस्य भगवतः त्रेतादिषु युगेषु आविर्भावमात्रं बोध्यम्। जीवादिवत् प्राकृतजन्मराहित्य मित्यर्थः। अजायमानो—जन्मरहितोऽपि सन् वहुधा —वहुवारं विजायते, रामकृष्णाद्यवताररूपेण लीलाविलासाय आविर्भवति। इति श्रुतिप्रमाणात् अजो नाम जन्मरहितोऽपि सन् स्वकीयां शुद्धां सत्त्वात्मिकां

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ।

अतएव इहास्य विज्ञानान्मुक्तिरित्युक्तम्

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुनेति । २

ननु ब्रह्मरुद्रादयोऽपि लोकेश्वराः कथ्यन्ते । सत्यं, भवन्तु ते ईश्वराः, सामर्थ्ययोगात् । पारमैश्वर्यं तु हरेरेव, "तमीश्वराणामित्यादि श्रुतेः । ततश्च राजसेवकेष्वपि राजवत्तेष्वपीश्वरत्वं तद्गुणांशयोगात् भाक्तं सिद्ध्यति ।

ब्रह्मादयः हि हरेरुत्पन्नाः श्रुयन्ते श्रीनारायणोपनिषदि । "अथ पुरुषो ह वै नारायणो", "अहं कामयत

---

स्वरूपशक्तिमवलम्ब्य जगद्धिताय प्रकृतिं स्वरूपशक्तिं स्वेनेव अधिष्ठाय स्वरूपेण स्वरूपशक्त्या स्वेच्छया सम्भवामि इति । मम जन्म कर्म च दिव्यं तत्वतो वेत्ति दिव्यमप्राकृतं मत्कर्मादिकं यः अनुभवति जानाति, 'न विद्यते यस्य च जन्म कर्म वा" इत्यादि श्रीमद्भागवतवाक्यात् गुणातीतत्वात् भगवतः जन्मकर्मणोः नित्यत्वम् सिद्धम् । एवंरूपेण भगवत्तत्त्वं य यथार्थतः वेत्ति तस्य जन्ममृत्युजनितं दुःखं न भवति ।

श्रीमद्भगवच्चरणप्राप्तिश्च स्यात् ॥ २

तत्र विप्रतिपद्यन्ते— नन्विति । ब्रह्मारुद्रादयोऽपि ईश्वराः इति कथ्यन्ते । तत्र समादधाति, पारमैश्वर्यं तु हरेरेव युज्यते । ब्रह्मादीनां लोकेश्वराणां पारमैश्वर्यं न सम्भवति । ब्रह्मादीनां यत् ऐश्वर्यं तत् भगवत्नारायणापेक्षिकम् । यथैव राजसेवकेषु राजशक्तेः भाक्तत्वेन, गौणत्वेन प्रयुक्तत्वम् तद्वत् भगवतः विष्णोः शक्तिपरतन्त्रतया एव

प्रजाः सृजयेत्यारभ्य नारायणात् ब्रह्मा जायते, नारायणात् रुद्रो जायते, नारायणात् प्रजापतिः प्रजायते, नारायणात् इन्द्रो जायते, नारायणात् अष्टौ वसवो जायन्ते नारायणादेकादश रुद्रा जायन्ते, नारायणात् द्वादशादित्याः जायन्ते ।

महोपनिषदि च एको ह वै नारायणः आसीन्न ब्रह्मा,नेशान इत्यारभ्य तस्य ध्यानान्तस्थस्य ललाटात्त्र्यक्षः शूलपाणिः पुरुषोऽजायत बिभ्रच्छ्रियं सत्यं ब्रह्मचर्यं तपो वैराग्यमित्यादि । तत्र ब्रह्मा चतुर्मुखो जात इत्यादि च श्रूयते । ३

नारायणशब्दः खलु श्रीपतेरेव सञ्ज्ञा । "पूर्वपदात् संज्ञायामगः" इति तस्यामेव णत्वविधानात् । ४

---

ब्रह्मादीनां शक्तिमत्त्वम् । अथ "पुरुषो ह वै" इत्यत्र नारायणसकाशात् ब्रह्मारुद्रादीनां सृष्टिः श्रूयते । नारायणोपनिषदि-नारायणात् ब्रह्मा-रुद्रेन्द्रादीनां सृष्टिः "नारायणात् ब्रह्मा जायते" इत्यादिभ्यः वाक्येभ्यः ज्ञायते । महोपनिषदि च एकः एव नारायणः सृष्टेः प्राक्काले आसीत्, न ब्रह्मा, प्रजापतिः, नेशानः, न शङ्करः । एकस्यैव परमात्मनः स्थितिः सिद्ध्यति इति भावः, ध्यानान्तस्थस्य परमात्मनः ध्यानकाले, ललाटात्, कपाल-प्रदेशात्, शूलपाणिः, शिवः, सत्यरूपं श्रियं च बिभ्रत् अजायत । ब्रह्मा तस्मात् परमात्मनः अजायत । ३

नारायणशब्दः श्रीपतेः, विष्णोः सञ्ज्ञा, अभिधानम् । नराणां समूहः नारम् । नाराणां अयनं नाम आश्रयः यः स एव नारायणः । "पूर्वपदात् सञ्ज्ञायमगः" इत्यनेन पाणिनीयसूत्रेण इत्यत्र नस्यणत्वविधानम् । ४ ।

विष्णुपुराणे च

यस्य प्रसादादहमच्युतस्य

भूतप्रजासृष्टिकरोऽन्तकारी

क्रोधाच्च रुद्रः स्थितिहेतुभूतो

यस्माच्च मध्ये पुरुषः परस्तादित्यादि

मोक्षधर्म्मे— प्रजापतिञ्च रुद्रञ्चाप्यहमेव सृजामि वै

तौ हि मां न विजानितौ मम मायाविमोहिताविति

च्छन्दोगयास्तु रुद्रं विधिपुत्रं पठन्ति । यथा— विरुपाक्षाय धात्रंशाय विश्वेदेवाय सहस्राक्षाय ब्रह्मणः पुत्राय ज्येष्ठायामोघाय कर्माधिपतये इति ।

---

प्रमाणान्तरं दर्शयति— विष्णुपुराणेति, यस्य च भगवतः प्रसादात् अहं प्रजापतिः सृष्टिकरः इति, क्रोधात्, भगवतः कोपात् रुद्रोऽजायत । मध्ये सृष्टिस्थिति हेतुभूतस्य विष्णोः आविर्भावः । प्रजापतिरुद्रस्रष्टृत्वं प्रमाणान्तरेण दर्शयति— प्रजापतिं रुद्रञ्चाहमेव सृजामि । तौ ब्रह्माशिवौ मां परमात्मानं न विजानितौ । यतो हि तावपि ममसाया-विमोहितौ स्तः ।

"दैवीह्येषा गुणमयी ममसायादुरत्यया" अर्थात् मम परमेश्वरस्य माया, वहिरङ्गा शक्तिः, दुरत्यया, नाम दुरतिक्रमा इति । स्मृतिवचनात् । छान्दोग्योपनिषदि च रुद्रः विधिपुत्रः, ब्रह्मणः पुत्र इति वर्णितमस्ति । "विरुपाक्षाय धात्रंशाय इत्यत्र ब्रह्मणः सकाशात् रुद्रस्य सृष्टिरिति उक्तमस्ति । कल्पभेदे च रुद्रः ब्रह्मणः जातः, नारायणाच्च इति संगच्छते । शतपथाष्टमूर्त्तब्राह्मणे चोक्तमस्ति-सम्वत्सरात् कुमारो, पुत्रो जातोऽभूत् । तस्य कुमारस्य रोदनकाले किं कारणात् त्वं रोदिषि कुमार । इति प्रजापतिः ब्रह्मा अब्रवीत्, पप्रच्छ । सः कुमारोऽब्रवीत् ।

शतपथाष्टमूर्त ब्राह्मणे "सम्वत्सरात् कुमारोऽजायत । कुमारोऽरोदीत्, तं प्रजापतिरब्रवीत् कुमार ! किं रोदिषि । यच्च ममतपसो जातोऽसीति, सोऽब्रवीत् "अनपहतपाप्माऽहमस्मि हन्त ! नामानि मे देहि" इत्यादिना श्रीवाराहे च–

नारायणः परो देवस्तस्माज्जातचतुर्मुखः
तस्मात् रुद्रो भवेद्देव स च सर्वज्ञतां गतः

इति तदिदञ्च कल्पभेदात् सङ्गच्छतीयम् । ५

ननु महेशादिसमाख्यया रुद्रपारतम्यं मन्तव्यम् । मैवम् तस्य महेन्द्रादिसमाख्यावत् वैफल्यात् इन्द्रसमाख्यैव शक्रस्य तत् साधयेत् । "इदि" पारमैश्वर्ये इति धातुपाठात् किं पुनर्महत्त्व विशेषितासौ, तस्यानीश्वरत्वं सर्वाभ्युपगतम् । ऐश्वर्यं च कर्मायत्तं शतमखसमाख्ययावगम्यते ।

---

अकथयत्, अनपहतपाप्मा अस्मि, नामानि मे देहि । इत्यत्र रोदितीति रुद्रः इति अभिधीयते । बराहपुराणे च "नारायणः परोदेवः" इत्यादिवाक्यात् नारायण-सकाशात् चतुर्मुखस्य वेधसः सृष्टिरिति उक्तमस्ति । तस्मात् प्रजापतेः सकाशात् रुद्रस्य उत्पत्तिरिति, सा एव स्मृतिः पठति । कल्पभेदेन शिवस्य नारायण - सकाशात् ब्रह्मणः सकाशाच्च सृष्टिरिति अभिहितम् । ५

महेश्वरादीनां पारतम्यं निराकरोति । — नन्विति । अथ महेशः इति ईशानामीशरूपेण श्रूयते । कथं विष्णोरेव पारतम्यं इति चेत् समादधाति । यथैव महेन्द्रः इति संज्ञामात्रम्, तथैव महेश्वराद्यभिधानमात्रम् । एवंरूपेण महादेवसमाख्यापि सञ्ज्ञामात्रम् । तेषां

एवं महादेवसमाख्यापि देवराजसमाख्यावत् बोध्या। तथा च प्रबलप्रमाणवाधात् सा सा च निष्फलैव महावृक्ष-समाख्यावद् भवेत् । ६

विधिरुद्रयोः यज्ञपुरुषाराधनाल्लोकाधिकारित्वं भारते स्मर्यते ।

"युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः ।
पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुमः ।।इति
मयासृष्टः पुरा ब्रह्मा यद्यज्ञमयजत् स्वयभ् ।
ततस्तस्य वरान्प्रीतो ददावहमनुत्तमान ।।

मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव चेति । युधिष्ठिर-शोकापनोदने च–

विश्वरूपो महादेवः सर्वमेधे महाक्रतौ
जुहाव सर्वभूतानि स्वयमात्मानमात्मना । इति

---

ब्रह्मरुद्रप्रभृतीनां पारमैश्वर्यविषयः न युक्तः । "तमीश्वराणां परमं महेश्वरम्" इत्यादिप्रबलप्रमाणवाधात् । तथा च ब्रह्मारुद्रादीनामैश्वर्यस्य विष्ण्वापेक्षिकत्वात् न तेषां पारमैश्वर्यकथनं समीचीनम् । ६

ब्रह्मारुद्रापेक्षया विष्णोः पारतम्यंथ दर्शयितुं शास्त्रान्तरप्रमाणं प्रदर्शयति विधिरिति । विधिरुद्रादयोऽपि यज्ञपुरुषनारायणाराधनामाध्यमेन लोकाधिकारित्वमवापुः । पद्मःभूः, पद्मयोनिः ब्रह्मा सहस्रकोटियुगमधि-कृत्य तपः कृत्वात्रैलोक्यधातृत्वं प्राप्तवान् । महाभारते भगवतः विष्णोः वाक्यं— वर्त्तते-पुरा प्राचीनकाले मयासृष्टः, सन् ब्रह्मा यद्यज्ञं चकार । ततः यज्ञकरणानन्तरं तस्योपरि प्रीतः सन्नहं विष्णुः

महादेवः सर्वमेधे महात्माहुत्वात्मानं देवदेवो बभूव । विश्वांल्लोकान् व्यष्टभ्य कीर्त्या विराजते बुद्धिमान् कृत्तिवासा इति । ७

पशुपतित्वं च रुद्रस्य विष्णुवरायत्तं श्रुतिराह । सोऽब्रवीत् वरं वृणीष्व । अहमेव पशूनामधिपतिरसानीति, तस्मात् रुद्रः पशूनामधिपतिरिति । ८

वेदापहारात् रक्षा च विधेः हरिकर्तृकैवेति पाद्मे पठ्यते । विधिवधपापात् रुद्रः हरिणा मोचितः इति स्मर्यते मात्स्ये-रुद्रोक्तिः-

ततः क्रोधपरितेन संरक्तनयनेन च ।

वामाङ्गुष्ठनखाग्रेण छिन्नं तस्य शिरोमयेति ॥

ब्रह्मोक्तिश्च— यस्मादनपराधस्य शिरश्छिन्नं त्वया मम,

तस्माच्छापसमायुक्तः कपाली त्वं भविष्यसीति ।

---

अनुत्तमान् नास्ति उत्तमः वरः येभ्यः यस्मात् तादृशान् वरान् ददौ । मत्पुत्रो भव लोकाधिकारी च भव इति । तथा च विश्वरूपो महादेवः सर्वमेधयज्ञे आत्मानमपि आहुतवान् अदेवो भूत्व कीर्त्या च सर्वलोकं व्याप्तवानिश्च । ७

शिवस्य पशुपतित्वं च विष्णुवरायत्तमिति श्रुतिः पठति । सः विष्णुः अब्रवीत्, वरं वृणीष्व । शङ्करस्य उत्तरं तत्र अहमेव पशूनामधिपतिरसानि, भवामि इति वरं ययाचे । ततः सः विष्णुवरेण पशुपतित्वं प्राप्तवान् । ८

प्रमाणान्तरं दर्शयति— शिवकर्तृकं ब्रह्महत्याजनितं पातकमपि हरिकृपावशात् विनश्यतिस्मेति । क्रोधपरितेन, रोषवशेन वामाङ्गुष्ठनखाग्रेण तस्य विधेः शिरः, मस्तकं मया शिवेन छिन्नम् । तस्मात्

रुद्रोक्तश्च-- अहमहाकुलितो भूत्वा चरन् तीर्थानि भूतले ।
ततोऽहं गतवान् देवि ! हिमवन्तं शिलोच्चयम् ।
तत्र नारायणः श्रीमान् मया भिक्षा प्रयाचिता ।
ततस्तेन स्वकं पार्श्वं नखाग्रेण विदारितम् ॥
महत्यसृग्वतीधारा तस्य पार्श्वे विनिःसृता ।
विष्णु प्रसादात् सुश्रोणि । कपालं तत् सहस्रधा ।
स्फुटितं बहुधायातं स्वप्नलब्धधनं यथेति । ६

दुर्जयत्रिपुरहेतुकापन्निस्तारो हरिहेतुकः स्मर्यते भारते ।

विष्णुरात्मा भगवतो भवस्यामिततेजसः
तस्माद्धनुर्ज्यासंस्पर्शं स विसेहे महेश्वरः इति ।

---

तेन हेतुना शापसमायुक्तः शापग्रस्तः सन्, महाव्याकुलितो सन् भूतले तीर्थानि चरन्, विचरणं कृत्वा हिमवन्तं हिमालयप्रदेशं प्राप्तः । तत्र हिमालयप्रदेशे मया शिवेन नारायणो भिक्षा प्रयाचिता । तेन नारायणेन स्वकं पार्श्वं, स्वस्याङ्गस्य एकपार्श्वं विदारितम् । तत महत्यसृग्वती-धारा, महती रुधिरधारा विनिःसृता । विष्णुप्रसादेन शिव-करस्थ-कपालः सहस्रधा भग्नः सन् भूतले अपतत् । युद्धेऽपि शिवस्य हरिसहायवत्त्वं महाभारते स्मर्यते । ६

हरेः पारमैश्वर्यं प्रमाणान्तरेण दर्शयति— दुर्जयेति । दुर्जयत्रि-पुरराक्षसहेतुकविपत्सकाशात् हरस्य हरिहेतुकनिस्तारः, हरिकर्तृकरक्षा महाभारते स्मर्यते । अमिततेजसः, अप्रमेयतेजःसम्पन्नस्य भगवतः भवस्य, शङ्करस्य विष्णुः आत्मास्वरूपः, अतः अस्मात् हेतोः धनुर्ज्यायाः संस्पर्शं स महेश्वरः विसेहे ।

विष्णुधर्मे च त्रिपुरं जघ्नुषः पूर्वं ब्रह्मणा विष्णुपञ्जरम्
शङ्करस्य कुरुश्रेष्ठ । रक्षणाय निरूपितमिति ।
जृम्भणास्त्रेण बाणयुद्धापतितो रक्षितः स्मर्यते वैष्णवे ।
जृम्भणास्त्रेण गोविन्दो जृम्भयामास शङ्करम्
ततः प्रणेशुर्दैतेयाः प्रमथाश्च समन्ततः ।
जृम्भाभिभूतस्तु हरो रथोपस्थ उपाविशत्
न शशाक तदा योद्धुं कृष्णेनाक्लिष्टकर्मणा ।१०

श्रीरामायणे च परशुरामोक्तिः--
हुङ्कारेण महाबाहु विस्मितोऽथ त्रिलोचनः
जृम्भितं तद्धनुर्दृष्ट्वा सैवं विष्णुपराक्रमैः
अधिकं मेनिरे विष्णुं देवाः सर्षिगणास्तदा ।

---

महाभारतस्य विष्णुधर्मे च पूर्वं प्राचीनकाले, त्रिपुरजघ्नुषः त्रिपुरान्तकस्य शङ्करस्य रक्षानिमित्तं ब्रह्मणा विष्णुपञ्जरं, विष्णुपञ्जराख्यं स्तोत्रं निर्मितम् ।

जृम्भणास्त्रेण, शस्त्रविशेषेण पतितः, आक्रान्तः, शङ्करः, हरिकर्तृकः रक्षितः इति विष्णुपुराणे उक्तमस्ति । तथा च जृम्भणास्त्रेण हरस्य भीतत्वं सूचयति । जृम्भणास्त्रेण अक्लिष्टकर्मणा, अविद्यास्मितादिपञ्चक्लेशरहितान् जान् कर्तुं शीलमस्येति अक्लिष्टकर्मा तेन संकल्पमात्रेण सर्वकर्त्रा कृष्णेन अभिभूतः, पराहतः शङ्करः इति भावः । १०

श्रीरामायणे भगवतः परशुरामस्य भार्गवस्योक्तिः, हुङ्कारेण युद्धे आह्वान-मात्रेण महाबाहुः शङ्करः स्तम्भितः । भग्नं विखण्डितं शैवधनुः दृष्ट्वा देवाः विष्णुं शङ्करसकाशात् अधिकं, श्रेष्ठं मेनिरे । नरसखेन नारायणेन युध्यमानं शिवं संजिहीर्षितो, संहर्तुमिच्छा,-जिहीर्षा; तेन

नरसखेन नारायणेन सह युध्यमानस्तेन संजिहीर्षितो
ब्रह्मणा प्रबोधितः प्रपत्त्या तेन संरक्षितो स्मर्यते भारते ।

प्रसादयामास भवो देवं नारायणं प्रभुम् ।
शरणं च जगमाद्यं वरेण्यं वरदं हरिम् ।

इत्यादिना । कालकूटान्निस्तारश्च तत्कीर्त्तनादिति स्मर्यते ।

अच्युतानन्त-गोविन्दमन्त्रमानुष्टुभं परम्
ॐ नमो सम्पूटीकृत्य जपन् विषधरो हरः । इति । ११

---

श्रीरामायणे भगवतः परशुरामस्य भार्गवस्योक्तिः; हुङ्कारेण युद्धे आह्वान-मात्रेण महाबाहुः शङ्करः स्तम्भितः, भग्नं विखण्डितं शैवधनुः दृष्ट्वा देवाः विष्णुं शङ्करसकाशात् अधिकं, श्रेष्ठं मेनिरे । नरसखेन नारायणेन युध्यमानं शिवं संजिहीर्षितो, संहर्तुमिच्छा,-जिहीर्षा, तेन इषितः-संजीहीर्षितो नारायण ब्रह्मणा प्रत्यबोधितः, संप्रार्थितः सन् रुद्रः-प्रपत्त्या, तत्शरणागत्या तेनैव विष्णुना रक्षितः । इति स्मर्यते भारते भवः, शिवः नारायणं प्रभुं भगवन्तं प्रसादयामास, प्रसन्नं कारयामास । तथा च वरेण्यं, श्रेष्ठं वन्दनीयं, वरदं, अभयप्रदं हरिं शरणं जगाम । रुद्रसकाशात् हरेः पारम्यं पुनः प्रदर्शयति-कालकूटेति । अर्थात् सागर मन्थनसमये तत् कीर्त्तनात् विष्णोः संकीर्त्तनात् कालकूटान्निस्तारश्च, विषप्रभावात् परित्राणं च हरस्येति ।

ॐ नमो सम्पूटीकृत्य, प्रणवसमन्त्रं विनियोज्य हरः विषधरो, क्षीरसागरात् उत्थितस्य कालकूटस्य धारणकर्त्ता इति । तत्र अच्युतः नास्ति च्युतः, क्षयः यस्य "क्षरः सर्वाणि भूतानि
कूटस्थोऽक्षरः उच्यते । इतिस्मृतेः ।
अनन्तः = नास्ति अन्तः, अन्तिमं, शेषपर्यायं यस्य, तम् गोविन्दं = गां, धेनुं, पृथिवीं, श्रुतिं च विन्दति नाम आनन्दयति, पालयति चेति तम् गोविन्दमिति भावः । मन्त्रोऽयं अनुष्टुभश्छन्दःपरः । ११

सर्वेश्वरात्, अन्ये तु सर्वे ब्रह्मादयः प्रलये विनश्यन्ति इति मन्तव्यम् । एको ह वै नारायण आसीन्नब्रह्मा नेशानः इत्यादिश्रवणात् ।

ब्रह्मादिषु प्रलीनेषु नष्टे भूते चराचरे
आभूतसंप्लवे प्राप्ते प्रलीने प्रकृतौ महान्
एको तिष्ठति सर्वात्मा स तु नारयणः प्रभुरिति ।
ब्रह्माशम्भुस्तथैवार्कश्चन्द्रमाश्च शतक्रतुः
एवमाद्यास्तथैवान्ये युक्ता वैष्णव-तेजसा
जगत्कार्यावसाने तु वियुज्यन्ते च तेजसा
वितेजसश्चैते सर्वे पञ्चत्वमुपयान्ति वै इति

विष्णुधर्मात् । १२

---

ब्रह्मादीनां प्रलये विनश्वरत्वं दर्शयति – सर्वेश्वरादन्येति । सर्वेश्वरादन्ये, परमेश्वरविष्णोः सकाशात् भिन्नाः सर्वे ब्रह्मादयः देवाः, प्रलये सृष्ट्यन्तकाले, विनश्यन्ति, विनाशं प्राप्नुवन्ति ।

"एको ह वै नारायणः" इत्यत्र सृष्टेः प्रागेव केवलस्य विष्णोः स्थितिः वर्त्तते इति दर्शयति । न ब्रह्मणः, नापि रुद्रस्य स्थितिः । पुनः स्मृतिप्रमाणेन ब्रह्मादीनां नश्वरत्वं दर्शयति । चराचरे लोके नष्टे, स्थावरजङ्गमे विनाशे सति तदानीं आभूतसंप्लवे नाम भूतप्रलयकाले अखिले कार्ये स्वकारणे विलये सति, अर्थात् जलस्य तदा रसे विलयः, पञ्चमहाभूतानां लयः पञ्चतन्मात्रेषु, पञ्चतन्मात्राणां लयः अहंकारे, अहंकारस्य लयः महत्तत्त्वे, महत्तत्त्वस्य लयः प्रकृतौ, प्रकृतेश्च लयः परमात्मनि । तदा भूतसंप्लवे एकः तिष्ठति परमात्मा, परब्रह्म । स एव परमात्मा अखिलकारणस्वरूपः नारायणः । ब्रह्मा-रुद्र सूर्य- चन्द्र शतक्रतु-प्रभृतयः देवाः वैष्णवतेजसा, विष्णुप्रभावेण समन्विताः प्रभाविताः । विष्णुधर्म्मे च ते देवाः यदा वितेजसः विष्णुतेजोविच्छिन्नाः जाताः तदा पञ्चत्वमुपयान्ति, विनश्यन्ति इति भावः । १२

प्रकृतिर्मायया ख्याता व्यक्ताव्यक्तस्वरूपिणी
पुरुष चाप्युभावेतौ लीयेते परमात्मनि ।
परमात्मा च सर्वेषामाधारः पुरुषः परः
स विष्णुनामा सर्वेषु वेदान्तेषु च गीयते ।

इति वैष्णवात् ।

नष्टे लोके द्विपरार्द्धावसाने महाभूतेष्वादिभूतं गतेषु
व्यक्ते व्यक्तं कालवेगेन याते भवानेकः शिष्यते शेषसञ्ज्ञः ।

---

प्रकृतेः पुरुषस्यापि परमात्मनि प्रलीनत्वं स्पष्टीकरोति — प्रकृतिरिति, व्यक्ताव्यक्तस्वरूपाणि महदादीनि त्रयोविंशतिसंख्यकानि व्यक्ततत्त्वानि, अव्यक्तरूपा मूलप्रकृति च माया इति अभिहिता । सा प्रकृतिः पुरुषश्च उभौ परमात्मनि, परे ब्रह्मणि लीयेते ।

स परमात्मा परंब्रह्म सर्वेषामाधारः इति सूचयति — परमात्मा चेति । तद् ब्रह्म सर्वेषां चराचराणां भुवनानामाधारः, आश्रयमवलम्बनं च । निराधारस्य जगतः स्थितिरसम्भवात् । स च परमात्मा विष्णुः इति सर्वेषु शास्त्रेषु, पुराणेषु इतिहासेषु, वेदान्तेषु च गीयते, कथ्यते इति भावः ।

प्रमाणान्तरं दर्शयति — नष्टे लोके इति ।
द्विपरार्द्धसंख्यकानां वत्सराणां अवसानसमये, प्रलयकाले संप्राप्ते, महाभूतेष्वादिभूतं गतेषु, पृथिव्यादिकार्याणां कारणे लयेषु, कालवेगेन, महाकालप्रभावेण, व्यक्ते अव्यक्तं याते, अहङ्कारस्य व्यक्ते रूपे, व्यक्तस्य महत्तत्त्वस्य, अव्यक्ते, प्रकृतौ प्रलीनत्वे सति भवान् एकः अद्वितीयः शेषसञ्ज्ञः पुरुषः शिष्यते, अवशिष्यते । इति श्रीमद्भागवते श्रीकृष्णं प्रति देवकीस्तुतिः । तथा च हरिर्हेतुकोत्पत्त्यादिभिः, हरिसकाशात् उत्पत्त्यादिश्रवणात्

इति भागवताच्च । तथा च हरिहेतुकोत्पत्त्यादिभिः विध्यादीनामनीश्वरत्वं निर्बाधं सिद्धम् । १३

अतएव तद्भक्तिस्तैरेवानुष्ठीयते ।

अथापि यत् पादनखावसृष्टं
जगत् विरिञ्चोपहृतार्हणाम्भः
शेषं पुनात्यन्यतमो मुकुन्दात्
को नाम लोके भगवत् पदार्थः

यच्चौच-निःसृत-सरत् प्रवरोदकेन तीर्थेन मूर्द्ध्न्यधिकृतेन शिवो शिवोऽभूदिति च श्रीमद्भागतात् ।

एकः प्रसारयेत् पादौ
अन्यः प्रक्षालयेन्मुदा
परस्तु शिरसा धत्ते
तेषु कोऽभ्यधिकः ॥ इति

---

विध्यादीनां ब्रह्मारुद्रप्रभृतीनां अनीश्वरत्व निर्बाधं सिद्धम्, बाधा-रहिततया विष्णोः पारमैश्वर्यं सिद्ध्यति इति भावः । १३

अतएव, पूर्वोक्तकारणानुशीलनात् तद्भक्तिः, विष्णुभक्तिः तैः ब्रह्मादिभिः देवैः अनुष्ठीयते । तथा हि यत्पादनखावसृष्टं, यस्य पदविनिःसृता सती गङ्गा शेषं भुवनत्रयं पुनाति । अन्यतमः मुकुन्दात्, तस्मात् मुकुन्दात् अन्यः कः वर्त्तते यः भगवत्पदवाच्यः । न कोऽपि इत्यर्थः । एकः पादौ प्रसारयेत्, त्रिविक्रमरूपी विष्णुः बलिसकाशात् दानग्रहण-समये स्वकीयेन एकेन पादेन आकाशमण्डलं परिव्याप्तवान्, तदा अन्यः ब्रह्मा तत्पदयुगं मुदा परमानन्देन प्रक्षालयामास,अपरस्तु शिवः शिरसा धत्ते

पुराणान्तराच्च । ब्रह्मादयः सुराः सर्वे
विष्णुमाराध्यते पुरा
स्वं स्वं पदमनुप्राप्ताः
केशवस्य प्रसादतः । इति

नारसिंहाच्च– ते देवाः ऋषयश्चैव नानातनुसमाश्रिताः
भक्त्या संपूजयत्येनं
गतिञ्चैषां ददाति सः । इति

नारायणीयाच्च– यत्तु भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुरिति शिवाङ्गस्पर्शात् गङ्गाम्भसः पावित्र्यं मन्यन्ते, तन्मन्दम् । उक्तवाक्येभ्यस्तेन शिरसा धृतत्वात् पवित्रमिदमिति विज्ञाय पस्पृशुरिति तदर्थाच्च । हरस्य गात्रसंस्पर्शात पवित्रत्वमुपागतेत्यत्रापि तस्य पावित्र्यं शुद्धिप्रदत्वं प्राप्तेत्यर्थः । १४

---

धारयामास । तेषु हरि–ब्रह्मा–शिवेषु कः अभ्यधिकः नाम वरेण्यः इति प्रश्नः । अर्थात् विष्णुरेवेति भावः, पुरा, सृष्टिकाले सर्वे सुराः, ब्रह्मादयः देवाः, विष्णुमाराध्य केशवस्य, भगवतः विष्णोः प्रसादतः, स्वं स्वं, स्वकीयं पदं प्रजापति–सुरपत्यादिपदवीमनुप्राप्ताः, प्राप्तवन्तः इति नारसिंहात् नाम नृसिंहपुराणात् । महाभरते नारायणधर्मे चोक्तम्— ते इन्द्रादयः, ऋषयश्च नाना-विग्रहधारणं कृत्वा भक्त्या एनं नारायणं संपूजयन्ति । सः गोविन्दः एषां सुराणां गतिं ददाति, निर्द्धारयति ।

शिवस्पर्शेन गङ्गाजलं पवित्रतामधिगच्छति इति, तन्मन्दम् । नाम न समीचीनम् । "शिरसा धत्ते" इत्यनेन तस्या विष्णुपद-विनिःसृतत्वात् गङ्गायाः पावित्र्येण शङ्करस्य शिरसि एव तद्धारणं सूच्यते । १४

यत्तु शाम्बलाभाय हरेः रुद्राराधनं पार्थविजयाय तत् स्तवनं च भारते स्मर्यते । तत्तु नारदाद्याराधनवल्लीला-रूपमेव बोध्यम् । यत्तु द्रोणपर्वान्ते शतरुद्रीयार्थं रुद्रमाचक्षाणो व्यासस्तस्य परमकारणत्वं प्राह, तत खलु तदन्तर्यामिपरतया ज्ञेयम्, परं ब्रह्मद्वयाभावात् तद्द्वयस्यानिष्टत्वाच्च । १५

तदित्थं हरेः पारतम्ये सिद्धे केषुचित् पुराणेषु विध्यादीनां पारम्यं निशम्य न भ्रमितव्यम् । तेषां राजसतामसत्वेन हेयत्वात् । तदुक्तं मात्स्ये–'संकीर्णास्तामसाश्चैव राजसाः सात्त्विकास्तथा । कल्पाः चतुर्विधाः प्रोक्ताः ब्रह्मणः दिवसा हि ते ।

---

पुनः हरेः रुद्रोपासनादिकं लीलाविलासमात्रमिति निरूपयति—यत्त्विति । साम्बलाभाय हरेः कृष्णस्य रुद्रोपासना श्रूयते । महाभारते च पार्थस्य, अर्जुनस्य विजयनिमित्तं हरिकर्तृकं रुद्रस्तवनं दृश्यते । किं च कारणं तत्रेति चेत्—समादधाति । लीलारूपमेवेति बोध्यम् । अर्थात् तत् केवलं भगवतः लीलाविभासमात्रम् । "लोकवत्तु लीलाकैवल्यम्" इति वेदव्यासप्रणीतत्वात् । आप्तकामोऽपि भगवान् भक्तमनोवाञ्छासिद्ध्यर्थं तदभीप्सापूर्त्यर्थं मानवसुलभं लीलाविलासमाचरति । अतः पार्थविजयाय शङ्करस्तवनं न कदाचित् तस्य पारमैश्वर्यहानिं प्रदर्शयति, अपि तु परिपोषयति, भक्तवात्सल्यप्रदर्शनान्निति । १५

तदित्थं नाम उपर्युक्तप्रकारेण सिद्धे पारमैश्वर्ये हरेः केषुचित् पुराणेषु कुत्रचित् च स्थले ब्रह्मादीनां पारतम्यश्रवणेन न भ्रमितव्यम् । बहुविधानि पुराणानि सन्ति । सात्त्विकराजसतामसभेदात् । मत्स्यपुराणे चतुर्विधकल्पविषये पर्यालोचनं दृश्यते । संकीर्णाः, तामसाः, राजसाः

यस्मिन्काले तु यत् प्रोक्तं पुराणं ब्रह्मणा पुरा ।
तस्य तस्य तु माहत्म्यं तत्तत् कल्पे विधीयते ॥
अग्नेःशिवयो र्माहात्म्यं तामसेषु प्रकीर्त्यते ।
राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः ।
संकीर्णेषु सरस्वत्याः पितॄणां च निगद्यते ।
सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः ।
तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिमिति ॥ १६

कौर्मे च–

असंख्यातास्तथा कल्पाः ब्रह्मविष्णु-शिवात्मकाः ।
कथिताः हि पुराणेषु मुनिभिः कालचिन्तकैः ॥
सात्त्विकेषु तु कल्पेषु माहात्म्यमधिकं हरेः ।

तामसेषु शिवस्योक्तं राजसेषु प्रजापतेः इति ॥
वेदविरोधिस्मृतीनां हेयत्वं मनुराह ।

---

सात्त्विकाः चेति । यादृशं यत कल्पं तादृशस्य देवस्य तत्र प्राधान्यम् । तामसेषु कल्पेषु शिवस्य, अग्नेश्च माहात्म्यं वर्तते । राजसेषु ब्रह्मणः, विधेः, प्रजापतेः अधिकं प्राधान्यम् । संकीर्णेषु, राजस-तामस-मिश्रितेषु कल्पेषु सरस्वत्याः पितॄणां च महात्म्यमधिकं निगदितम् । परिशेषे सात्त्विकेषु कल्पेषु विष्णो र्माहात्म्यं प्रधानतयावर्त्तते । १६

एतस्मिन्विषये पुराणान्तरप्रमाणं दर्शयति – कौर्मेति कूर्म-पुराणे चैवं गीयते यतः ब्रह्म विष्णु-शिवात्मकाः बहुविधाः कल्पाः इति

या वेदबाह्याः स्मृतयः याश्च काश्च कुदृष्टयः ।

सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठाः हि ताः स्मृताः ॥

तदेव सात्त्विकानामेव पुराणादीनां प्रमाणजनकत्वादुपादेयत्वम् । तदन्येषान्तु विपर्यासात्मकत्वादेव हेयत्वं सुव्यक्तमिति । न तैः भ्रमितव्यम् सुधियेति । १७

तस्य हरेस्तिस्रः शक्तयः सन्ति । पराख्या क्षेत्रज्ञाख्या मायाख्या चेति । "परास्य शक्तिर्विविधैव श्रूयते

स्वाभाविकी ज्ञान-बल-क्रिया च"

प्रधान-क्षेत्रज्ञपतिर्गुणेशः

---

कालचिन्तकैः, त्रिकालज्ञैः मुनिभिः कथिताः, उक्ताः । सात्त्विकेषु, सत्त्वगुणसम्पन्नेषु कल्पेषु हरेः, विष्णोः प्राधान्यम् । तामसेषु, तमोगुणसम्पन्नेषु शिवस्य अधिक माहात्म्यम् । राजसेषु कल्पेषु प्रजापतेः माहात्म्यमधिक्य-मिति ।

वेदविरोधीनां स्मृतीनां अनुपादेयत्वं प्रतिपादयति —वेद विरोधिस्मृतीनामिति । वेदानुकूलत्वेनैव स्मृतीनां प्रामाण्यम् । परन्तु वेदप्रतिकूलत्वेन स्मृतीनां न प्रामाण्यम् । याः वेदबाह्याः, वेदप्रतिकूलाः स्मृतयः ताश्च सर्वाः निष्फला इति । सात्त्विकानां सत्त्वगुणसम्पन्नानां पुराणानां प्रमाजनकत्वात, यथार्थज्ञानजनकत्वात्, तेषामेव उपादेयत्वं नाम ग्रयोजनवत्त्वम् । अन्येषान्तु वेदविरोधीनां स्मृतीनां, विपर्ययकरत्वात्, विपर्यासात्मकज्ञानप्रदत्वात् हेयत्वं, अनादरत्वमिति सिद्धम् । १७

तस्य परात्मनः हरेः त्रिविधाः शक्तयः । पराशक्तिरपराशक्तिः क्षेत्रज्ञाशक्तिश्चेति । तत्र पराशक्तिः, अर्थात् परमात्मनः चित्शक्तिः, स्वरूपशक्तिः । सा च शक्तिः अन्तरङ्गा इति उच्यते । तटस्था शक्तिः

संसार-बन्ध-स्थिति-मोक्षहेतुः इति श्रुतेः॥

विष्णुशक्तिः पराप्रोक्ता क्षेत्रज्ञाख्या तथापरा।

अविद्या कर्मसज्ञान्या तृतीया शक्तिरिष्यते।

इति श्रीविष्णुपुराणाच्च। १८

स च पराख्यशक्तिमद्रूपेण जगन्निमित्तं, क्षेत्रज्ञादि

---

नाम जीवशक्तिः। क्षेत्रज्ञेति अभिहिता। तृतीया च माया। सा तु बहिरङ्गा शक्तिरिति कथिता। अविद्या कर्म, कार्यं यस्याः सा। अस्य परमात्मनः पराशक्तिः, स्वाभाविकी ज्ञानशक्तिः, स्वाभाविकी बलशक्तिः स्वाभाविकी क्रियाशक्तिरित्येवंरूपेण त्रिविधा। तस्याः च ज्ञानशक्तेः सम्वित्शक्तिरिति नामान्तरम्, बलशक्तिः सन्धिनी इति अभिहिता। क्रियाशक्तिश्च ह्लादिनी शक्तिरिति अभिधीयते। परमात्मनः चित्शक्तेः प्राधान्यं विष्णुपुराणे उक्तमस्ति। विष्णोः परा शक्तिः चित्शक्तिरूपेण, क्षेत्रज्ञा शक्तिः तटस्था शक्तिरूपेण जीवचैतन्यमिति अभिधीयते।

"एतत् यो वेत्ति तं प्राहुः

क्षेत्रज्ञ इति तद्विदः।"

इति स्मृतिप्रामाण्यात्। १८

भगवतः निमित्तोपादानकारणत्वं दर्शयति— स चेति। अखिलं कार्यं कारणद्वयमपेक्षते। उपादानकारणं निमित्तकारणं च। यथा घटरूपकार्यनिमित्तं मृत्तिका उपादानकारणं, कुम्भकारश्च निमित्तकारणम्। कार्यस्य उत्पत्तिनिमित्तं चेतरस्य अपेक्षात्वद्भावात्। स च परमात्मा पराख्यशक्तिमद्रूपेण, चित्शक्तिस्वरूपेण जगतः निमित्तकारणम्। निमित्तकारणस्य लक्षणं तत्र निरूपितम्—स्वानतिरिक्त-कार्यजनकमिति। अर्थात् परमात्मासकाशात् तस्य कार्यभूतस्य जगतः अनन्यत्वमेवसिद्धम्। श्रीकृष्ण द्वैपायनेन, "आत्मकृतेः परिणामात्" इत्यस्मिन् सूत्रे तथोक्तत्वात्। तथा श्रुतिश्च तत्र पठति "अथ हैव आत्मा प्रकृतिमनुप्रविश्यात्मानं बहुधा

शक्तिमद्रूपेण तु तदुपादनं भवति ॥ "तदात्मानं स्वयम्-कुरुतेत्यादि श्रवणात् । १६

स च देहदेहीभेदशून्यो हरिरात्ममूर्त्तिर्बोध्यः ।
सत्पुण्डरीकनयनं मेघाभं विद्युताम्बरम्
द्विभुजं मौनमुद्राढ्यं वनमालिनमीश्वरम् ।

---

चकार", इति । नारदपुराणे च तादृशः सिद्धान्तः परिपुष्टः यथा—

अविकारोऽपि परमः प्रकृतिं तु विकारिणीम्
अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयते ।

क्षेत्रज्ञादिशक्तिमद्रूपेण, तटस्थाशक्तिमत्त्वेन, आदि पदेन बहिरङ्गाशक्तिमत्त्वेन च परंब्रह्म चिज्जडात्मकजगतः उपादानकारणम् । उपादानकारणस्य लक्षणं तत्र- "कार्याभिन्नकारणमिति । अर्थात् यत् समवेतं सत् कार्य्यामुत्पद्यते । घटोत्पत्त्यर्थं मृत्तिकावत् । तच्च परंब्रह्म "आत्मानं स्वयम-कुरुत", क्षेत्रज्ञाशिदक्तिमत्त्वेन जगत् ससर्ज । "तत् सृष्ट्वा तदेवानु-प्राविशत्" इति श्रुतिप्रामाणात् । शक्ति-शक्तिमतोः अभेददृष्ट्यापि कार्यं कारणयोः जगत्-ब्रह्मणोः अभिन्नत्वमेव सिद्ध्यति । १६

स च परमात्मा आत्ममूर्त्तिः, आत्मैव मूर्त्ति स्वरूपो यस्य, "आत्मा एव विग्रहः, विग्रह एव आत्मा" इति श्रुतत्वात् देहदेहिभेदशून्यः, भगवतः हरेः शरीरं न तत्-स्वरूपात् भिन्नमिति वक्तव्यम् । सत्पुण्डरीकनयनं सद्यप्रस्फुटितपद्मवत् नयने यस्य सः सत्पुण्डरीकनयनस्तं पद्मलोचनमिति भावः । मेघाभं मेघः इव आभा कान्तिर्यस्येति, तम्, श्यामवर्णमित्यर्थः, विद्युताम्बरम्, विद्युत इव अम्बरं, वसनं यस्य, पीतवासमित्यर्थः द्विभूजं भूजद्वयविशिष्टं, राम-कृष्णादयः अवताराः द्विभूजविशिष्टाः इत्यर्थः । अयं परमात्मा प्रकृति-पुरुषयोः आत्मास्वरूपः ।

साक्षात्प्रकृतिपुरुषयोरयमात्मा—

गोपालस्तमेकं गोविन्दं

सच्चिदानन्दविग्रहम् ।

अर्द्धमात्रात्मकरामो

ब्रह्मानन्दैकविग्रह: ।।

इति श्रुते: । २०

---

मत: परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।

मयि सर्वमिदं प्रोतं सूत्रे मणिगणा: इव ।

वीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् इति स्मृते; ।

तच्च परंब्रह्म सच्चिदानन्दविग्रहरूपं, सत् स्वरूपं नाम प्राकृतरूपरहितम् । त्रिकालबाधराहित्यं सत्त्वमिति सत्त्वलक्षणस्योपपत्ते: । "सदेवसौम्य इदमग्र आसीत्" इति श्रुतिप्रमाणात् । तत्र य: संकर्षणरूप: राम: ब्रह्मानन्दैकरूप:, अर्द्धमात्रात्मक: संकर्षण-वासुदेव-प्रद्युम्ना-निरुद्धेषु चतुर्षु व्यूहेषु राम: अर्द्धमात्रात्मक: । स च परंब्रह्म सच्चिदानन्दविग्रहरूप: । उक्तं च

सर्वे नित्या: शाश्वताश्च देहास्तस्य परात्मन:

हेयोपादेयरहिता नैव प्रकृतिजा क्वचित् ।

इत्येवंरूपेण श्रीमद्भागवत उक्तत्वात् स च परमात्मा चित्स्वरूप: एवेति ।

अनादिरात्मा पुरुषो निर्गुण: प्रकृते: पर: ।

प्रत्यागात्मा स्वयं ज्योति विश्वं येन समन्वितम् ।।

तच्च परंब्रह्म आनन्दस्वरूपम् तत्र श्रुतिवाक्यम् "आनन्दं ब्रह्मेति व्यजानात्" । "आनन्दात् खलु इमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्ति आनन्दं अभिसंविशन्ति, ब्रह्मण: आनन्दत्वादय: गुणा: अनन्ता: एव तदभिन्नस्वरूपा: इति दिक् । २०

तस्य गुणाश्च आनन्दादयोऽनन्तास्ततो नातिरिच्यन्ते । एकधैवानुद्रष्टव्यम् । "नेह नानास्ति किञ्चन" इत्यादिश्रवणात् । तथापि विशेषबलात् भेदव्यवहारो भवति । २१

विशेषश्च भेदप्रतिनिधिर्भेदाभावेऽपि तत्कार्यं प्रत्याययन् दृष्टः । सत्तासती भेदोभिन्नः, कालः सर्वदास्तीत्यादौ

---

गुणानां अनन्तत्वादपि तन्निष्ठस्य ब्रह्मणः न तद्भेदः । "सर्वोपेता च दर्शनात" इत्यस्मिन् सूत्रे अखिलस्य गुणस्य एकस्मिन् परे ब्रह्मणि उपपत्तिदर्शनात्, तच्च विजिज्ञासितव्यम् ।

एकधैवानुद्रष्टव्यम् इति श्रुतेः । "नेह नानास्ति किञ्चन" इत्यादिषु सिद्धेऽपि ब्रह्मणि निर्भेदे, विशेषबलेन भेदः वर्त्तते इति, अवश्यं स्वीकार्यम् । विशेषः नाम भगवतः अचिन्त्यशक्तिः, यया शक्या निर्भेदेऽपि ब्रह्मणि भेदः व्यवह्रियते । तथा च सिद्धेऽपि परंब्रह्मणः एकत्वे "भोक्ता भोग्यं प्रेरितारं च मत्वा" इति श्रुतिवाक्यात् भोक्तृत्व-भोग्यत्वयोः भेदः स्पष्टः एव । २१

अचिन्त्यशक्तिबलेन असत्त्वेऽपि भेदः प्रतीयते एव । यथैव कालः सर्वदा अस्ति, सत्ता सती इत्यादयः व्यवहाराः प्रवर्त्तन्ते । यथैव सत्ता इति अभिधानेन स्वयमेव वस्तुनः स्थितिति विद्यते । तथापि सत्तासती इति लोकव्यवहारः । तथैव शक्ति शक्तिमतोः अभेदत्वं सिद्धमपि, भेदप्रतिनिधिना विशेषेण भेदस्य प्रतीतिः स्यादिति वक्तव्यं समीचीनम् । परमेश्वरविषये यदि विशेषः न स्वीक्रियेत तर्हि सत्यज्ञानमनन्तमित्यत्र सत्यादिशब्दानां पर्यायतापत्तिः, "एकवाच्यवाचित्वं खलु पर्यायत्वं" इत्युक्तेः । अर्थात् यद्यपि ब्रह्म-तद्धर्मयोः भेदः न वर्त्तते, तथापि विशेषबलेन भेदः प्रतिपद्यते । सत्यमिति पदेन अनृतविरहितं, ज्ञानमित्यनेन अज्ञानराहित्यम्, अनन्त

तमन्तरा विशेषण–विशेष्य–भावादिकं न सम्भवेत् । २२

न च सत्ता सतीत्यादि धीर्भ्रमः, सन् घटः इतिवत् अबाधात् । न चारोपः, सिंहो माणवकः नेत्यादिवत् । सत्ता सती नेति कदाप्यव्यवहारात् । न च सत्तादेः सत्ताद्यन्तरा-भावेऽपि स्वभावादेव सतीत्यादि व्यवहारः तस्यैवेह तत्-शब्देनोक्तेः । तस्मान्निर्भेदेऽपि हरौ भेदप्रतिनिधिः सोऽभ्युपेयः । २३

---

मित्यनेन अपरिच्छिन्नं चावगम्यते । सत्यादिपदानां पर्यायतासिद्धौ ब्रह्मणः नानार्थपरत्वं सिध्यति । तद्वारणायवश्यं—विशेषः ग्राह्यः । सत्यादिपदानां सत्यत्वादयः विभिन्नार्था बुध्यन्ते सत्यं, विशेष-बलेन तु सत्यत्वादिधर्माः ब्रह्मस्वरूपाभिन्नविरेका. इति ।

अतो न सत्यज्ञानमनन्तमित्येषां पदानां पर्यायतापत्तिः । २२

अथ सत्ता सती धीः बुद्धिः भ्रममात्रमिति चेत्— न । सन् घटः इत्यादिवत् अबाधात् । यथैव सन् घटः इत्यादि व्यवहारः । घटस्य विद्य-मानत्वमवधारयति, यथा वा कालः सर्वदा अस्ति इत्यादौ कालस्य विद्यमानत्वमवबोधयति तद्वत् । सत्ता सतीत्यादि व्यवहारः न भ्रमपद-वाच्यः । सत्ता सतीत्यादिषु न चारोपः परिकल्प्यते । सिंहो माणवकः इत्यादिषु सिंहस्य शौर्यपराक्रमादयः गुणाः बालके आरोप्यन्ते । न तत्र वस्तुतः सिंहगताः गुणाः बालके सम्भाव्यन्ते । परन्तु सत्ता सतीत्यादिषु न तादृशः । सत्ता सती इत्यनयोः शब्दयोः स्वाभाविकतया भेदाभावेऽपि भेदः अवश्यमेव स्वीकार्यः । तस्मात् निर्भेदेपि हरौ ब्रह्म-तद्धर्मयो र्भेदा-भावेऽपि भेदप्रतिनिधिना विशेषाख्येन, अचिन्त्यशक्तिबलेन भेदप्रतीतिः स्वीकर्त्तव्या । २३

"यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति
एवं धर्मान् पृथक् पश्यं-स्तथैवानुविधावति"।

इति कठश्रुतेः। अत्र ब्रह्मधर्माननुक्त्वा तद्भेदो निषिद्धः। न हि भेदसदृशे तस्मिन्न सति धर्मधर्मिभावधर्मबहुत्वे भाषितुं युज्यते। न च धर्मानित्यनुवादः श्रुतितोऽन्येन तेषामप्राप्तेः। २४

निर्विशेषवादिनापि शोधितात् त्वं पदार्थात वाक्यार्थ-

---

ब्रह्मधर्माणां ततसकाशात् अभेदत्वं सूचयति— यथोदकमिति। विज्ञानमानन्दं ब्रह्म", सत्यं-ज्ञान-मनन्तं ब्रह्म" इत्यादिषु ब्रह्मण विज्ञानानन्दत्वादिगुणः ब्रह्मसकाशात् न भिन्नः। "परमात्मा देह-देहि-भेदशून्यः इत्युक्तत्वात्। अर्थात् यथैव प्राकृतशरीरविषये देहात्मनोः वर्तते महान् भेदः। तत्र आत्मा अविनाशी नित्यः। देहस्तु नश्वरः। परन्तु भगवतः न तथैव मन्तव्यम्। तत् सकाशात् तस्य गुणानां विग्रहस्य च न भेदः। अर्थात् यथैव भगवतस्वरूपस्य चिन्मयत्वं, तथैव तस्य विग्रहस्य, अनन्त-कल्याणगुणानामपि चिन्मयत्वम्। ब्रह्मसकाशात् तद्धर्माणां पृथक्पश्यतः पुरुषस्य अधोगतिं दर्शयति – यथोदकमिति। यथा पर्वतेषु वृष्टं पतितं उदकं, वारिराशि दुर्गे, निम्नस्थलाभिमुखे विधावति, निम्नप्रदेशं गच्छति, तदवत् यः ब्रह्मधर्मान् ब्रह्मसकाशात् भिन्नतया पश्यति, सः अधोगामी नरकगामी भवति इत्यर्थः नात्र "ब्रह्मधर्मान्" इत्युक्तेः अनुवादत्वम्। प्राप्तस्य पुनप्राप्तिरभावात्। एतद् व्यतिरिक्तेन अन्येन केनापि श्रुतिवाक्येन इत्थमप्राप्तेः। २४

निर्विशेषवादिनापि, अद्वैतवादिनापि (नास्ति विशेषः कश्चित् ब्रह्मणि इति यस्य मतं स निर्विशेषवादी, तेन, निर्विशेषवादिना अवश्यमेव विशेषः स्वीकर्तव्यः इति दर्शयति। शोधितात् त्वं पदार्थात्, किं नाम तत्त्वं-पदार्थयोः शोधनमिति चेत् उच्यते। "तत्त्वमसि" इति वाक्यं अद्वैत-वादिभिः अखण्डार्थपरकमिति सिद्धान्तितम्, तत् पदस्य मुख्यार्थः तावत्,

स्यैश्वर्यस्य भेदो नाभिमतो भेदाभेदो वा। तथा सति तस्य मिथ्यात्वाद्यापत्तेः। २५

तत्र विशेषः न चेत् स्वप्रकाशचिद्ब्रह्म नेप्यैश्वर्यस्याभानं तद्भानस्य भेदभ्रमा विरोधित्वेपैक्यभानस्य तद्विरोधित्वञ्चेति भेदकार्य्यं कथं स्यात्? तस्मात् अवश्याभ्युपेयः विशेषः। २६

---

ईश्वरगतः सर्वज्ञत्वादिगुणः। एवं पदस्य मुख्यार्थश्च जीवगतः अल्पज्ञत्वादिधर्मः। परन्तु लक्षणया सर्वज्ञत्वाल्पज्ञत्वादिधर्म परित्यागेन केवलं चैतन्यमात्रमवशिष्यते। तच्च शुद्धं चिन्मात्रं ब्रह्म। यथैव सोऽयं देवदत्तः इत्यस्मिन् वाक्ये देवदत्तांशेन न कश्चित् विरोधः। अपि तु सः, तद्देशकालावच्छिन्नः, अयं, एतद् देशकालावच्छिन्नः, उभयोः अवच्छिन्नत्वांशरूप विरुद्धधर्मयोः परित्यागेन देवदत्तमात्रांशे न विरोधः, इति निर्विशेषवादिनामभिमतम्। अतो हि शोधितयोः तत्त्वं पदार्थयोः ऐक्यमेवार्थः। तदेव ऐश्वर्यस्य ब्रह्मसकाशात् न भेदः, न वा भेदाभेदः। तदभिमतानुसारंअखिलस्यावस्तुत्वात्। अतो तदैक्यमेव ब्रह्माभिन्नं स च विशेषः एवेति। २५

मायावादिभिरपि विशेषः स्वीकर्तव्यः इति दर्शयति— निर्विशेषवादिनामयं तावत् सिद्धान्तः यत् ऐक्यं ब्रह्मसकाशात् न भिन्नम्। तथा सति शुद्धचिन्मात्रस्य प्रकाशे तदभिन्नस्य ऐक्यस्यापि सर्वत्र परिप्रकाशः स्यात्। परन्तु तन्न। यदि ऐक्यस्य प्रकाशः स्यात् भेदप्रतीतिरूपस्य भ्रमस्य सुतरामनभ्युपगमः स्यात्। ऐक्यस्य भेदविरोधीत्वात्। सत्यं चैतत् चिद्रूपस्य ब्रह्मणः सर्वत्र प्रकाशः पुनः तदभिन्नस्य ऐक्यस्याप्रकाशः इति विप्रतिसिद्धमेतत्। अर्थात् एतत्—समाधानाय निर्विशेषवादिभिः विशेषः अवश्यं स्वीकर्त्तव्यः। अन्यथा प्रपञ्चकल्पनायाः वैयर्थ्यापत्तिः स्यादिति। २६

स च वस्त्वभिन्नः स्वनिर्वाहकश्चेति नानावस्थेति । तस्य तादृक्त्वं धर्मिग्राहकप्रमाणसिद्धं वर्ण्यम् । २७

सः परमात्मा हरिः अस्मदर्थो बोध्यः "अहमात्मा गुडाकेश" इत्यादिषु आत्माऽहमर्थयोः अभेदेन स्मरणात् ।

सोऽकामयत बहुस्यां प्रजायेयेत्यादिभिः श्रुतेः । "अहमेवासमेवाग्रे नान्यत् यत् सदसत् परं । पश्चादहं यदेतच्च सोऽवशिष्यते सोऽस्म्यहमितिस्मृतौ चावधृतया च

---

स च विशेषः वस्त्वभिन्नः परमार्थभूतवस्तुसकाशात् अभिन्नः । तच्छक्तिरूपमित्यर्थः । ननु तादृशी शक्तिः कस्योपरि आधारिता इति चेत् --अनवस्थादोषः स्यादिति निवारयति स्वनिर्वाहकश्चेति । सः विशेषः स्वनिर्वाहकः न कस्योपरि आधारितः एव । अतः नानवस्था । यदेव प्रमाणं धर्मिणं ग्राहयति तदेव धर्मानपि, तेनैव विशेषबलेन धर्म--धर्मिणोः अभेदत्वेऽपि भेदग्रहणमिति भावः । २७

परमात्मनः अस्मदर्थगम्यत्वं दर्शयति-- स चेति । स परमात्मा हरिः अस्मदर्थो बोध्यः, अस्मद् पदस्य वाच्यः । नेदं जगत्, नापि जीवः । "अहमात्मा गुडाकेश", "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः" "एकोहं बहुस्यां प्रजायेय" इत्यादिषु श्रुतिस्मृतिवाक्येषु अहमर्थः नाम अस्मद् पदस्य वाच्यः परमात्मा इति बोध्यः । "अहमात्मा गुडाकेश" इत्यादिषु अहं शब्दस्य, आत्मशब्दस्य च समानाधिकरणत्वात् भगवतः एव आत्मस्वरूपत्वम् ।

"अहमेवासमेवाग्रे" इत्यादौ श्रुतिवाक्ये, अग्रे नाम सृष्टेः प्राक् अहमेव, भगवतः केवल स्थितिः विद्यते । एवकारस्य प्रयोगेण अन्येषां व्यावर्तनम् । नान्यस्य स्थितिरित्यर्थः । पश्चात् सृष्टिविलयकाले यदेतच्च अवशिष्यते, यस्य स्थिति विद्यते सः, अहम्, परमात्मा विष्णुरेव । सृष्टेः

शुद्धात्मनोः अस्मदर्थत्वमुक्तं । अतो अन्तेऽपि स्थितिवाक् युज्यते । २८

अत एव प्रपन्नमायानिरासकता मुक्तप्राप्यता च तस्योक्ता "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते"

ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्"। इत्यादौ तस्मात् अहमर्थं परमात्मा विशुद्धः । स एव कर्ता भोक्ता च बोध्यः । "स विश्वकृद्विश्वकृदात्मयोनिः"। एषः देवः विश्वकर्मा महात्मा, सोऽश्नुते सर्वान् कामान्, स ब्रह्मणा विपश्चितेति श्रुतेः ।

---

प्राक्काले यस्यैव स्थितिः अन्तकाले च तस्यैव परमात्मनः विद्यमानत्वमिति भावः ।

"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा" इति स्मृतिप्रमाणात् । २८

भगवत्प्रपत्त्या मायानिवृत्तिं दर्शयति— अत एवेति । अतएव, भगवतः विष्णोः केवल पारमैश्वर्यसिद्धत्वात् प्रपन्नमायानिरासकता तस्य, तत्सविधे प्रपत्त्या, शरणागत्या मायायाः, अज्ञानस्य निरासकता मुक्तप्राप्यता च सिध्यति । मुक्तावस्थायामपि जीवः प्रपत्तिरूपां भगवदाराधनां करोतीत्यर्थः । श्रीशुकसनकादीनां मुक्तानां श्रीमद्भागवतानुशीलनरूपं भजनं दृश्यते । उक्तं च श्रीमद्भागवते—

निगमकल्पतरोर्गलितं फलं शुकमुखादमृतं द्रवसंयुतम् ।
पिबत भगवतं रसमालयं मुहुरहो रसिकाः भुवि भावुकाः

इति स्मृतिशास्त्र-प्रमाणेन "मुहुरहो" इति पदेन, पिबत रसमालयमिति पदेन च मुक्तावस्थायामपि जीवस्य भगवदाराधना श्रूयते । गीतास्वपि —

"दैवीह्येषा गुणमयी मममाया दुरत्यया
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते"।

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः। इति स्मृतेश्च
भक्त्या प्रयच्छत्युक्तेः भक्तेच्छयैव तस्य नि पूर्णस्यापि

एषा हि मम,भगवतः गुणमयी माया त्रिगुणात्मिकाज्ञानरूपामायायाः त्रिगुणात्मिकात्वे स्मृतिप्रमाणम् "अजामेकां लोहित-शुक्ल--कृष्णां
बह्वीप्रजा सृजमानां स्वरूपा" । इति

मायायाः दुरत्ययत्वं दर्शयति—दुरत्ययेति । अतिशयेन दुःखेन त्यक्तुमशक्या नाम दुःसाध्या इति । परन्तु ये ये भक्त्या, मां भगवन्तं श्रीकृष्णं अनन्य भावेन देवतान्तरोपासनां त्यक्त्वा शरणमधिगच्छन्ति, शरणागत्यात्मिकया केवलया अहैतुक्यप्रतिहतरूपया अन्याभिलाषिताशून्यया भक्त्या आराधयन्ति, ते एव एतां त्रिगुणात्मिकां मायां तरन्ति । उक्तं च श्रीमद् भागवते ।

"स यदजया त्वजामनुशयीत गुणांश्च जुषन्
भजन्ति सरूपतां तदनु मृत्युमपेतभगः
त्वमुत जहासि तामहिरिव त्वचमात्तभगो
महसि महीयसेऽष्टगुणितेऽपरिमेयभगः" ॥

तस्मात् विष्णोः पारमैश्वर्यसिद्धेः अहमर्थः,-अस्मद् शब्दार्थविषयः परमात्मा विशुद्धं चित्स्वरूपं पवित्रं च । स एव कर्ता भोक्ता च । "उपद्रष्टानुमन्ता च भर्त्ता भोक्ता महेश्वरः" इति स्मृतेः । सः विश्वकृदात्मयोनिः । एषः देवः विश्वकर्मा, विश्वं करोति नाम सृजति । विश्वकृदिति पदेन भगवतः जगतः कृते अभिन्ननिमित्तोपादानकारणत्वमुक्तम् । तत्र श्रुतिः "यतो वा इमानि भूतानि जयन्ते, येन जातानि जीवन्ति, यत् प्रयन्ति, अभिसंविशन्ति, तद् विजिज्ञासस्व । तत्र चोत्तरवाक्यम्— आनन्दात् खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्ति, अभिसम्बिसन्ति, तद् आनन्दं ब्रह्मेति विजिज्ञासस्व ।

एवंभूतस्य भगवतः भक्तवत्सलत्वं प्रतिपादयति— पत्रेति । तत्र श्रीमुखवचनं,- मद् भक्तः पत्रादिकं यत् भक्त्या, प्रेम्णा प्रयच्छति, तदहम-

बुभुक्षोदयरहितः । तस्य तादृशत्वं च स्वेच्छामयस्येति ब्रह्मोक्तेः । २६

स च पुरुषोत्तमः क्वचित् द्विभुजः, क्वचिच्चतुर्भुजः पठ्यते । तत्र द्विभुजो यथा– सत्पुण्डरीकनयनमित्यादि ।

"प्रकृत्या सहित श्यामः पीतवासः जटाधरः ।
द्विभुजः कुण्डली रत्नमाली धीरो धनुर्द्धरः ॥

इति । तैत्तिरीयके च-दशहस्ताङ्गुलयो तशपद्याद्वावुरुद्वौबाहू आत्मैव पञ्चविंशकः इति । रहस्याम्नाये च-पाणिभ्यां श्रियं सवहतीत्यादिना । श्री सात्वते च–

नादावसाने गगने देवोऽनन्तः सनातनः ।
शान्तः-सम्वित्-स्वरूपस्तु भक्तानुग्रहकाम्यया ॥

---

श्नामि । प्रयतात्मनः, सभक्तिकान्तर्बाह्यविशुद्धात्मनः प्रदत्तमश्नामीति भावः । भक्त्या प्रयच्छतीत्युक्तेः अयं तावदभिप्रायः यत् पूर्णकामस्यापि भगवतः विविध-प्रयत्नोऽपि श्रूयते । यतो हि–

"मुहूर्त्तेनापि संहर्त्तुं शक्तो यद्यपि दानवान् ।
मद्भक्तानां विनोदार्थं करोमि विविधाः क्रियाः ।

तथा च–"अनन्यश्चिन्तयन्तो मां ये जनाः पर्युपासते
तेषामहं समुद्धर्त्ता मृत्युसंसार–सागरात्" । इति ॥ २६

स च पुरुषोत्तमः परमात्मा क्वचित् द्विभुजः, राम-कृष्णाद्यवतार-रूपेण, क्वचित् चतुर्भुजः, नारायणादिरूपेण, क्वचित् अष्टभुजरूपेण-आविर्भवति, अथर्वमूर्द्धिन द्विभुजस्य, श्रीरामरूपस्य वर्णनं यथा प्रकृत्या सहित नाम सीतया सह श्यामः, श्यामवर्णः पीतवासः, पीतवसन यस्य सः, जटाधरः, जटां धारयति यः, वनवासकालिकवेशः इत्यर्थः, द्विभुज, कुण्डली, कुण्डलयुक्तः, धनुर्द्धरः इति तैत्तिरीयके च भगवतः लीलामनुष्यरूपस्य वर्णन

अनौपम्येन वपुषा ह्यमूर्त्तो मूर्त्ततां गतः ।
विश्वमाप्यायवन् कान्त्या पूर्णेन्दुयुत तुल्यया ॥
वरदाभयदेनैव शङ्खचक्राङ्कितेन च
त्रैलोक्यधृतिदक्षेण युक्तपाणिद्वयेन स इति ॥

संकर्षणे च–पुरुषोत्तमस्य देवस्य विशुद्धस्फटिकत्विषः
समपादस्य हस्तस्य ह्येकवक्त्रस्य संस्थितिः ।
वराभयहस्तौ द्वावनुभारव्यकर्मणः । इति ॥ ३०

चतुर्भुजो यथा विश्वक्सेन·संहितायाम्–
अप्राकृततनुर्देवो नित्याकृतिधरो युवा ।
नित्यातीतो जगद्धाता नित्यैर्मुक्तैश्च सेवितः ।

---

दशाङ्गुलयः इत्यादयः । सात्वते च द्विभुजस्य रूपस्य वर्णना, तादृशस्य रूपस्य श्रेष्ठत्वमपि वर्त्तते इति वर्णितमस्ति ।

नादावसाने गगने, नादे, शब्दे गगने अवसाने भूतप्रलयकाले, कारणे कार्यस्य प्रलीनत्वे देवः, अनन्तः सनातनः, भक्तानुग्रहकाम्यया, भक्तानां, स्वजनानां कृते अनुग्रहकामनया शान्तः, सच्चितस्वरूपः सन् नाम ज्ञानस्वरूपः सन्, अनौपम्येन वपुषा, उपमारहितेन तनुकान्त्या, सौन्दर्य माधुर्यातिशयत्वादिति भावः । अमूर्त्तः मूर्त्ततां, अप्राकृतकलेवरत्वं प्राप्तः, सन् पूर्णेन्दुयुततुल्यया पूर्णचन्द्रसदृशकान्त्या, प्रभया विश्वमाप्यायवन् अखिलं जगत् आनन्दयन् शङ्खचक्राङ्कितेन हस्तद्वयेन युक्तः सन् त्रैलोक्यधारण-समर्थेन भुजद्वयेन युक्तः सन्, विशुद्धस्फटिकत्विषः, शुद्धस्फटिक इव त्विट् नाम अङ्गकान्तिः यस्य, तादृशेन संकर्षणेन सह, समपादस्य द्विपदस्य, एकवक्त्रस्य एकस्यैव मुखस्य अर्थात् द्विभुजरूपस्येति भावः । वरद अभयद च हस्तद्वय । ३०

विश्वकसेन—संहितायामपि भगवतः अष्टभुजरूपस्य वर्णनं परिस्पष्टमेव । अप्राकृततनुः, चिन्मयदेहधारी नित्याकृतिधरो युवा, नित्ययौवनयुक्तः, मुक्तैः, मुक्तपुरुषैः शुकसनकादिभिरपि सेवितः इति भावः विमलैः भूषणैः,

बद्धाञ्जलिपुटैः हृष्टैः निर्मलैः निरुपद्रवैः ।
चतुर्भुजश्यामलाङ्गः श्रीभूलीलाभिरन्वितः ॥
विमलैर्भूषणैर्नित्यैः भूषितो नित्यविग्रहः ।
पञ्चायुधैः सेव्यमानः शङ्खचक्रधरो हरिः ।

श्रीदशमे च-"तमद्भुतं बालकमम्बुजेक्षणं,
चतुर्भुजं शङ्खगदाद्युदायुधम् ।
श्रीवत्सलक्ष्मं गलशोभिकौस्तुभम्,
पीताम्बरं सान्द्रपयोदसौभगम्" ॥

श्री गीतासु च-"तेनैव रूपेण चतुर्भुजेन सहस्रबाहुर्भव विश्वमूर्त्तेः

---

अप्राकृतैः वस्त्रादिभिः युक्तः; नित्यविग्रहः—शाश्वतस्वरूपः इत्यर्थः ।
उक्तं चैवम्—

"सर्वे नित्याः शाश्वताश्च देहास्तस्य परात्मनः ।
हानोपादानरहिता नैव प्रकृतिजाः क्वचित् ॥
परमानन्दसन्दोहा ज्ञानमात्राश्च सर्वतः ।
देह-देहि भेदश्चात्र नेश्वरे विद्यते क्वचित् ॥"

दशमस्कन्धे श्रीकृष्णजन्मप्रसङ्गे भगवतः चतुर्भुजरूपविषये वर्णना दृश्यते-तमद्भुतमिति । अम्बुजे इव अक्षिणी यस्य, तम् अम्बुजेक्षणं, पद्मनयनं शङ्खचक्रगदाद्युदायुधम्, श्रीवत्सलक्ष्मं, श्रीवत्सपदचिह्नधारिणं गलशोभि-कौस्तुभं, कौस्तुभमणिशोभितकण्ठप्रदेशं, पीताम्बरं पीतवसनमिति ।
श्रीमद्भगवद्गीतास्वपि भगवतः चतुर्भुजरूपविषये उक्तमस्ति —

"तेनैव रूपेण चतुर्भुजेन
सहस्रबाहुर्भव विश्वमूर्त्ते ॥"

विष्णोर्भगवतः अष्टभुजविषये च श्रीमद्भागवते चतुर्थस्कन्दे "पीनायताष्ट-भुजमण्डलेति" ।-भगवतः अष्टभुजं अष्टायुधयुक्तम् । अष्टायुधेषु बलरामस्य

अष्टभुजो यथा चतुर्थे-

पीनायताष्टभुजमण्डलमध्यलक्ष्म्या ।
स्पर्द्धश्रिया परिवृत्तो वनमालयाद्यः ॥
बर्हिष्मतः पुरुष आह सुतान् प्रपन्नान् ।
पर्यन्यनादरुतया सघृणावलोकः इति ॥

आनन्दाख्यसंहितायान्तु रूपत्रयमुक्तम् -

स्थूलमष्टभुजं प्रोक्तं, सूक्ष्मञ्चैव चतुर्भुजम् ।
परं तु द्विभुजं प्रोक्तं, तस्मादेतत् त्रयं यजेदिति ॥ ३१

एतानि रूपाणि भगवति वैदुर्यमणिवद् युगपत् नित्याविर्भूतानि विभान्ति । तेषु चारुत्वाधिक्यात् कृत्स्नगुणव्यक्तेश्च द्विभुजस्य परत्वमुक्तं, न तु वस्त्वन्यत्वमस्ति । - नेह नानास्ति किंचन"- इत्यादि वचनात् ।

---

हलमूषलादिकं ग्रहणीयम् । वनमालया च युक्तम् — वनमालायाः लक्षण शब्दकल्पद्रुमे निरूपितं यत

आजानुलम्बिनी माला सर्वर्तु — कुसुमोज्ज्वला,
मध्ये स्थूल-कदम्बाढ्या वनमालेति कीर्त्तिता ।

आनन्दसंहितायां च भगवतः अष्टभुजरूपं स्थूलम्, चतुर्भुजरूपं तु तदपेक्षया सूक्ष्मम् । परन्तु रामकृष्णादीनां अर्थात् द्विभुजविशिष्टभगवत स्वरूपाणां सर्वापेक्षया सूक्ष्मत्वं, श्रेष्ठत्वं चेति नैव संशयस्यावसरः । अलुप्तैश्वर्यत्वेऽपि माधुर्य्यातिशयात् प्रेमानन्दप्रदत्वाच्च सर्वोपरि सर्वचित्ताकर्षकव्रजेन्द्रनन्दनस्वयं भगवतः श्रीकृष्णविग्रहस्य सर्वश्रेष्ठत्वमिति दिक् । ३१

एतानि भगवतः चतुर्भुजादि स्वरूपाणि वैदुर्यमणिवत् नित्यानि, कृष्णाद्यवताररूपेण युगपत् आविर्भूय शोभन्ते । द्विभुजस्य श्रेष्ठत्वं प्रतिपादयति- तेष्विति ।

यत्तु मन्यन्ते परमव्योम्नि नियोदितञ्च चतुर्भुजं रूपं, परं द्विभुजादिरूपं तु शान्तोदितमपरमिति तत् खलु अविचारिताभिधानमेव ।

सर्वे नित्या: शाश्वताश्च देहास्तस्य परात्मन:
हानोपादानरहिता: नैव प्रकृतिजा: क्वचित् ।
परमानन्दसन्दोहा: ज्ञानमात्राश्च सर्वत:
सर्वे सर्वगुणै: पूर्णा: सर्वदोषविवर्ज्जिता: ।

इति महावराहोक्तिव्याकोपात् । परन्तु द्विभुजमिति

---

ननु अष्टभुजादिषु भगवत: स्वरूपाभिन्नत्वे सति कथं द्विभुजस्यैव परत्वमुक्तं इति चेत्— समादधाति । तेषु भगवत: अष्टभुजादिषु बहुषु रूपेषु चारुत्वाधिक्यात् नाम सौन्दर्याधिक्यात्, माधुर्याधिक्याच्च भक्त-वात्सल्यत्वादि कृत्स्नगुणानामभिव्यक्तिवशात् द्विभुजस्य राम-कृष्णाभि-मानवसुलभलीलाविग्रहस्य परत्वं श्रेष्ठत्वमिति ।

तत्र विप्रतिपत्तिं दर्शयन् खण्डयति यत् इति । यत्तु मन्यन्ते, केषांचित् मतानुसारं परमव्योम्नि वैकुण्ठलोके यत् चतुर्भुजं नारायण रूपं विराजते तच्च परम्, श्रेष्ठम् । अन्ये खलु ये अवतारा: वर्त्तन्ते, ते तस्य नारायणस्य अंशविशेषा: एव । तत् परिहरति-तदिति । अर्थात् तादृशं वाक्यं अविचारिताभिधानमेव । अर्थात् विचारासह: एव । तन्मतं परिपोषयति—सर्वे इति । तस्य परस्य ब्रह्मण: सर्वे देहा:, परमात्मनां राम-कृष्णादीनां यानि प्रकाशितानि शरीराणि तानि नित्यानि, अप्राकृतानि । शाश्वतानि, सनातनानि, स्थिराणि इत्यर्थ: । हानोपादानरहिता, उत्पत्ति-विनाशरहिता, अविनश्वरत्वात् । परमानन्दसन्दोहा:, अखिलस्य आनन्दस्य समष्टिरूपा:, अर्थात् नित्यभूतानन्दरूपा इत्यर्थ । केवलमवताररूपेण तेषां

कण्ठोक्तिविरोधाम्नायी सिद्धान्तास्तेश्व । भेदहीनेष्वेव तेषु रूपेषु अंशीत्वांशत्वादिकं शक्तिव्यक्तितारतम्यस्य व्यपेक्षयाहुः यदुक्तं वृद्धैः--

शक्तेर्व्यक्तिस्तथाव्यक्तिस्तारतम्यस्य कारणम् । ३२

स च पुरुषोत्तमः श्रीपतिर्बोध्यः "श्रीश्च लक्ष्मीश्च पत्न्याविति यजुः श्रुतेः" कमलापतये नमः, रमामानसहंसाय गोविन्दाय नमोनमः रमावराय रामाय चेयर्बरणानुतिश्च पूर्वत्रश्री र्गीर्देवी लक्ष्मीस्तु रमादेवीति व्याख्यातारः ।

---

आविर्भावमात्रं बोध्यम्, ज्ञानमात्राश्च केवल ज्ञानरूपा इत्यर्थः । सर्वे भगवतः अवताराः । सर्वगुणैः पूर्णाः सर्वदोषविवर्ज्जिता.च ।

अष्टादशमहादोषैः रहिता भगवत्-तनुः
सर्वैश्वर्यमयी सत्यविज्ञानानन्दरूपिणी ।

अष्टादशमहादोषाश्च—

मोहस्तन्द्रा भ्रमो रूक्षरसता कामउल्वणः,
लोलता-मदमात्सर्य-हिंसा--खेद--परिश्रमौ ।
असत्य क्रोध-आकांक्षा आशङ्का विश्वविभ्रमः ।
विषमत्वं परापेक्षा दोषा अष्टादशोदिताः ॥

भेदहीनेषु तेषु सर्वेषां भगवतस्वरूपाणां अभेदे सत्यपि कथं द्विभुजस्य परत्वमिति चेत्—उच्यते । शक्ति--व्यक्तितारतम्यमेव तत्र कारणम् ।

सौन्दर्यमाधुर्यातिशयात भक्तवात्सल्यत्वादय
अखिलकल्याणगुणव्यक्तेश्च द्विभुजस्यैव श्रेष्ठत्वम् । ३२

स च पुरुषोत्तमः परमात्मा श्रियः लक्ष्म्याः पतिरिति बोध्यः । श्री, सरस्वती लक्ष्मीश्च पत्न्यौ यस्येति । लक्ष्म्यादीनां भगवतः सकाशात् स्वरूपाभिन्नत्वेऽपि विशेष बलेन केवलं लीलाविलासाय भिन्नमूर्त्तिधारणत्वं दर्शयत—न्निवति । नेह नानास्ति किञ्चन इत्यादीना श्रुतिवाक्यानी

ननु "नेह नानास्ति किञ्चनेत्यादि श्रवणात् न ब्रह्मणि कश्चित् लक्ष्म्यादिरूपो विशेषः शक्यो मन्तुं किन्त्वङ्गीकृतमायश्चायं विशुद्धसत्त्वमूर्त्तिस्तादृश्यैव लक्ष्म्या गिरा च युज्यते- इति चेत्- भ्रान्तमेतत् वह्न्युष्णतेव स्वरूपाभिन्ना पराख्यशक्तिः ब्रह्मण्यस्ति। "परास्य" शक्तिरित्यादिश्रुतेः। सैव तस्य लक्ष्मी-र्गीर्देवी चेति स्वीकार्यम्।

प्रोच्यते परमेशो यो
यः शुद्धोऽप्युपचारतः,
प्रसीदतु स नो विष्णुरात्मा
यः सर्वदेहिनामिति श्रीवैष्णवात्।
"अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिणी;
सा पराप्रकृतिः प्रोक्ता चेतना विष्णुसंश्रयात।

इति स्कान्दाच्च।

---

अनुपपत्तिरिति चेत—उच्यते भेदप्रतिनिधि एव तत्र कारणम्। लक्ष्मी सरस्वत्यादीनां पृथक्त्वस्वीकारे अद्वयतत्त्वस्य हानात्। लक्ष्म्यादीनां तत्सकाशात् अभिन्नत्वाच्च यथैव वह्निसकाशात् उष्णत्वस्य भिन्नता नैव शक्यं वक्तुम्। तद्वत् लक्ष्म्याः गीर्देव्याश्च भगवतः अभिन्नत्वम्। "परास्य शक्तिर्विविधैव श्रूयते" इत्यादिषु स्थलेषु अस्य परब्रह्मणः पराशक्तेः नाम चित् शक्तिरूपज्ञानशक्तेः त्रिविधाभिव्यक्तिः स्वीकार्या। स्वाभाविकी ज्ञानशक्तिः-स्वाभाविकी बलशक्ति-स्वाभाविकी-क्रियाशक्तिश्च। तत्र स्वाभाविकज्ञानशक्तेः सम्वित्रूपतया सरस्वत्याः अभिव्यक्तिः। क्रियाशक्तेः च ह्लादमात्रपरत्वात् ह्लादिन्याख्याशक्तिरूपेण लक्ष्मीस्वरूपत्वम्। परन्तु शक्तिदृष्ट्या उभयोः अभेदत्वं सिद्धम्। प्रकृतेः भगवदाश्रयत्वं प्रदर्शयति अपरन्त्वक्षरमिति। अपरं प्रधानं, अक्षरं, नित्यं जडरूपिणी,

सरस्वतीं नमस्यामि चेतनां हृदि संस्थिताम्,

केशवस्य प्रियां देवीं शुक्लां क्षेमप्रदां नित्याम् ।

इति स्कान्दे गीस्तोत्राच्च इत्थं च पूर्वपक्षः निरस्तः । ३३

ननु "नेह नानास्ति कञ्चन." इति निर्विशेषत्वमुक्तं, मैवम् इह यदस्ति तन्नाना न । किन्तु स्वरूपानुबन्ध्येवेति, तत्रैव विशेषप्रत्ययात् "श्रीश्च लक्ष्मीश्च इत्यादेः प्रामाण्याच्च । लक्ष्म्या एव रूपान्तरं गीर्देवीति मन्तव्यम्" ।

"सन्ध्यारात्रिः प्रभाभूतिः मेधा श्रद्धा सरस्वती इति श्रीवैष्णवे तस्याः विशेषणात् । किञ्च–

ह्लादिनी सन्धिनी सम्बित् त्वय्येका सर्वसंस्थिते,

ह्लाद-तापकरी-मिश्रा त्वयि नो गुणवर्जिते ।

इति । तत्रैव त्रिवृत्परा कीर्त्यते । तत्र सम्बित्प्रधाना वृत्तिः गीर्देवी ह्लादप्रधाना तु लक्ष्मीरनयोः पूर्वात्तूत्तरानुगुणा बोध्या । सम्बिदः सुखानुधावनप्रसिद्धेः । ३४

---

जडस्वभावसंपन्ना सा परा प्रकृतिः — पराप्रकृतिपदेन बहिरङ्गाशक्तिरभिहिता । विष्णुसमाश्रयात् चेतना, क्रियाशीला इति भावः । ३३

"नेह नानास्ति किञ्चन" इत्यादि श्रुतिवाक्यानां निर्विशेषपरत्वं वारयति-- नन्विति । अर्थात् "नेह नानास्ति कंचन" इत्यादिकं श्रुतिवाक्यं न तावत् निर्विशेषब्रह्मपरकम्" । आशयस्तु अयमेव, परतत्त्वे ब्रह्मणि यत् वर्त्तते तन्नाना न, तात्त्विकदृष्ट्या शक्ति-शक्तिमतो अभेददृष्ट्या तत्त्वं एकमेव । भगवतः अन्तरङ्गाशक्तेः परिणामः अखिलं जगत् । तस्य शक्तेः परिप्रकाशत्वात् लक्ष्मी-सरस्वत्योः न तारतम्यम् लक्ष्म्याः रूपान्तरं वाणी, सन्ध्या, रात्र्यादिकं तस्याः पर्य्यायत्वाच्च । सा अनपायिनी अविनाशिनी । ३४

लक्ष्म्याः भगवदभेदादेव तद्वत् तस्याः व्याप्तिश्च तत्रैव स्मर्यते ।

नित्यैव सा जगन्माता विष्णोश्रीरनपायिनी
यथा सर्वगतो विष्णु स्तथैवेयं द्विजोत्तमेति ।

ततो भेदे तु व्याप्तिरियमपसिद्धान्तः घटे च । इत्थञ्चास्या जीवकोटित्वं निरस्तम् । एषा लक्ष्मी हरिवदनन्तगुणा तत्रैवोक्ता ।

न ते वर्णयितुं शक्ताः गुणान् जिह्वापि वेधसः
प्रसीद देवि ! पद्माक्षि ! मां स्वास्त्याक्षीः कदाचन । ३५

---

सा अनपायिनी, अविनाशिनी सर्वगता च, अतएव तस्या जीव-कोटित्वं सुतरां निरस्तम् । लक्ष्मी-जीवयोः शक्तित्वेनाभेदेऽपि शक्तिमतः भगवतः परमात्मनः केवलं लीला-विलासार्थं स्वरूपशक्त्या अपि तस्याः पृथक्रूपेण प्रकटनं दृश्यते । यद्यपि जीवः चेतनशक्तिः, तथापि तस्य बहिरङ्गाशक्तेः मायाया वशत्वात् तटस्था शक्तिरूपेण तस्य जीवत्वम् । लक्ष्म्यादीनां च तु स्वरूपशक्तित्वात् मायाधीनत्वाभावात् विष्णुवत् सर्वव्याप्यत्वाच्च न जीवकोटिकत्वम् ।

पुराणान्तरे च वर्णितमस्ति — सा लक्ष्मी नित्या, त्रिकालाबाध्यरूपा अप्राकृतस्वरूपा च भगवतः अनपायिनी शक्तिः । यथा विष्णुः सर्वेषां गुणानामाश्रयः तथैव इयं लक्ष्मी, सर्वविध गुणसम्पन्ना अतो भेदे यदि विष्णुसकाशात् लक्ष्म्याः भेदः स्यात् तर्हि अद्वयतत्त्वस्य हानिः । अतो अस्याः रमायाः जीवकोटौ प्रवेशो नास्ति । एषा लक्ष्मी हरिवत् अनन्तगुणा, आनन्दत्वादिगुणसम्पन्ना, वेधस ब्रह्मणः जिह्वापि रसनाऽपि वर्णयितुं न शक्ता । हे देवि ! मां प्रसीद । मां प्रति प्रसन्ना भव । कदाचिदपि मां मा त्याक्षीः, मा त्यज । ३५

ते च गुणाः मुक्तिदातृत्वहरिवशीकारित्वादयः कति-
चित् तत्रैव पठिताः ।

आत्मविद्या च देवि ! त्वं विमुक्तिफलदायिनी ।
का त्वन्या त्वामृते देवि ! सर्वयज्ञमयं वपुः ॥
अध्यास्ते देवदेवस्य योगिचिन्त्यं गदाभृतः ।
त्वया देवि ! परित्यक्तं सकलं भुवनत्रयम् ॥
विनष्टप्रायमभवत् त्वयेदानीं समेधितम् ।
दाराः पुत्रास्तथागारं सुहृद्धान्यधनादिकम् ॥
भवन्त्येतन्महाभागे ! नित्यं त्वद्वीक्षणात् नृणाम्
शरीरारोग्यमैश्वर्यमरिपक्षक्षयसुखम् ॥
देवि ! त्वद्दृष्टानां पुरुषाणां न दुर्लभम ।
सत्त्वेन सत्यशौचाभ्यां तथा शीलादिभिर्गुणैः ॥
त्यजन्ते ते नराः सद्यः संत्यक्ता ये त्वयामले ।
त्वयावलोकिताः सद्यः शीलाद्यैरखिलैर्गुणैः ॥
कुलैश्वर्यैश्च युज्यन्ते पुरुषाः निर्गुणाः अपि ।
स श्लाघ्यः स गुणी धन्यः स कुलीनः स बुद्धिमान्
स शूरः स च विक्रान्तो यस्त्वया देवि ! वीक्षितः ।
सद्यो वैगुण्यमायान्ति शीलाद्याः सकलाः गुणाः ॥
परांसुखी जगद्धात्री यस्य त्वं विष्णुवल्लभे ।

---

लक्ष्म्याः गुणाः कीदृशाः ? इति जिज्ञासायामाह ते च गुणाः—विष्णुपुराणे पठिताः मुक्तिदातृत्वहरिवशीकारित्वादयः गुणाः, अनन्ताः एव । तत्रैव आत्मविद्या च इत्यादिषु अर्थः स्पष्टः । श्रीविष्णुरिव इयं

इत्यादिना। हरिवत् बहुरूपेयं,सर्वत्र तदानुरूप्येण तदनुयातीति तत्रैवोक्तं––

देवत्वे देवदेहेयं मानुषत्वे च मानुषी
विष्णो र्देहानुरूपां वै करोत्येषात्मनस्तनुमिति । ३६

तेषु सवषु लक्ष्मीरूपेषु राधायाः स्वयं लक्ष्मीत्वं मन्तव्यम् । सर्वेषु भगवद्रूपेषु कृष्णस्य स्वयं भगवत्त्वमवत् । पुरुष बोधिन्यामथर्वोपनिषदि "गोकुलाख्ये मथुरामण्डले" इत्युपक्रम्य द्वे पार्श्वे चन्द्रावली राधिका च इत्युक्त्वा, यस्याः अंशे लक्ष्मी दुर्गादिका-शक्तिरित्यभिधानात् ।

निरस्तसाम्यातिशयेन राधसा स्वधामनि ब्रह्मणि रंस्यते नमः । इति भागवते श्रीशुकोक्तेः, बृहद्गौतमीये च तन्मन्त्रकथने–

देवी कृष्णमयी प्रोक्ता राधिका परदेवता
सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परेत्युक्तेः ।

---

महालक्ष्मी बहुरूपा, भगवतः आविर्भावानुसारिणी लीलावताररूपिणीत्यर्थः ।
उक्तं च गौतमीयतन्त्रे ।

यः कृष्णः सैव दुर्गा स्यात्, या दुर्गा कृष्ण एव सः ।
अनयोरन्तरादर्शी संसारात न विमुच्यते । ६

सर्वेषु लक्ष्मीरूपेषु श्रीमत्याः श्रीराधिकायाः स्वयं लक्ष्मीत्वं प्रतिपादयति सर्वलक्ष्मीमयीति । उक्तं च नारदपञ्चरात्रे श्रुतिविद्यासंवादे—

जानात्येका परा कान्ता सैव दुर्गा तदात्मिका ।
या परा परमा शक्तिः महाविष्णुस्वरूपिणी ।

एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयमिति अष्टमस्तु
तयोरासीत् स्वयमेव हरिः किलेति च श्रीभागवतात् । ३७

इति श्री वेदान्तस्यमन्तके सर्वेश्वरतत्त्व-
निरूपणे द्वितीयः किरणः ।

---

यस्याः विज्ञानमात्रेण पराणां परमात्मनः ।
मुहूर्त्तादेव देवस्य प्राप्तिर्भवति नान्यथा ॥
एकेयं प्रेमसर्वस्वभावा श्रीगोकुलेश्वरी ।
अनया सुलभो ज्ञेयः आदिदेवोऽखिलेश्वरः ।

"एते चांशकलाः" इत्येतत श्रीमदभागवतस्य प्रतिज्ञावाक्यम् । अर्थात् सर्वप्रमाणचक्रवर्त्तिनि श्रीमद्भागवताख्ये शास्त्रे स्वयं भगवतः श्रीकृष्णस्य सर्वेश्वरमयत्वं, सर्वावतारीत्वं च प्रतिपादितम । परव्योमाधिपति वैकुण्ठ-नाथनारायणोऽप्यस्य विलासमूर्त्तिरितिदिक् । ३७

इति श्रीवेदान्तस्यमन्तके- सर्वेश्वरतत्त्वनिरूपणे
द्वितीयकिरणे 'तत्त्वप्रदीपनी"
टीका सम्पूर्णा ।

# तृतीयः किरणः

अथ जीवा निरूप्यते । तल्लक्षणं च अणुचैतन्यमाहुः । श्रुतिश्च—एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश ।

बालाग्रशतभागस्य शतधा कल्पितस्य च
भागो जीवः स विज्ञेयः स चानन्त्याय कल्प्यते । (श्वे-5-9)

नित्यो नित्यानां चेतनश्चेतनानां
एको बहूनां यो विदधाति कामान्
तं पीठस्थं ये तु यजन्ति
विप्रास्तेषां शान्तिः शाश्वती नेतरेषाम् ।

इति श्रवणात्— । १

---

अथ शब्दः आनन्तर्यार्थे विधीयते । अर्थात् ईश्वरनिरूपणानन्तरं जीवः तटस्थाशक्त्यात्मकः विभुचैतन्यांशः अणुस्वरूपः इति । जीवस्य—अणुत्वे श्रुतिप्रमाणं दर्शयति । एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश इति श्रुतेः । अस्य अणुत्वं इन्द्रियाग्राह्यत्वमिति च प्रदर्शितम्, सूक्ष्मातिसूक्ष्मत्वात् । तत् प्रतिपादयति बालाग्रेति-केशाग्रशतभागस्य शतधा कल्पितः परिमाणः जीवस्वरूपमिति । तादृशोपनिषद्वचनात् । अतः तादृशपरिमाणविशेषे न तात्पर्यम् । तथा च जीवस्य नित्यत्वं साधयति— नित्योनित्यानामिति नित्यो नित्यानां, अनेकेषु नित्येषु जीवेषु एकः नित्यः, परमेश्वरः, चेतनः चेतनानाम्, अनेकेषु चेतनेषु एकः चेतनश्च विभुरीश्वरः एव, जीवात्मनः नित्यत्वं चेतनत्वं च प्रदर्शयति ।

"नित्यसर्वगतस्थाणुरचलोऽयं सनातनः
अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।"

स्मृतिश्च जीवात्मनः नित्यत्वं प्रकाशयति— । १

**एतेन भ्रान्तं ब्रह्मैवेको जीवस्तदन्ये सर्वे जीवादयस्तद-विद्याया कल्पिताः, स्वप्नद्रष्टेव रथादयः इत्येकजीववादो**

एतेन उपर्युक्तप्रकारेण ईश्वरस्य जीवस्वरूपस्य च निर्णयेन वेदान्तैकदेशिनामेकजीववादिनां मतमपास्तम् । तत्र कस्तावत् एकजीववादः इति जायमानायमाशङ्कायां समादधाति— भ्रान्तमिति । तत्र 'एकमेवाद्वितीयम्' "नेह नानास्ति किंचन" इत्यादिक श्रुतिवाक्यं, "ब्रह्मसत्यं जगन्मिथ्या जीव ब्रह्मैव नापरः" इत्यादिकं वाक्यं चाधारीकृत्य शुद्धं चिन्मात्रं ब्रह्म एकमेव तत्त्वं तच्च अविद्योपहितत्वेन अस्मद-युष्मद्‌प्रत्ययरूपत्वेन आभाति । अस्मद् प्रत्ययगोचरः अहमास्पदः जीवः । युष्मद् प्रत्ययगोचरार्थः त्रिविधः ।

प्रथम महदाद्यारभ्य पृथिव्यन्तं भूतपर्यन्तम् । द्वितीयं स्व सदृशं जीवान्तरम् । तृतीयश्च ईश्वराभिधेयः पुरुषविशेषः । परन्तु सर्वमव्यवस्तम् । कस्यचित् एकस्यापि वास्तवास्तित्वविरहात् । यथैव स्वप्ने नगर-राजधान्यादयः राजधान्यन्तर्गताः प्रजाः, तदन्तर्गतः स्वयमेव चेति । जाग्रदवस्थायां तु सर्वं मिथ्या । स्वयमेव अवशिष्यते । न स्वप्नानुभूतानां नगरराजधान्यादीनां स्थितिः । तथैव अविद्यानिवृत्यनन्तर केवल चित्स्वरूपं ब्रह्म अवतिष्ठते । न अन्ये जीवाः, न वा ईश्वरः, नापि वा जगत् । मतमिद एकजीववादे अभिधीयते । परन्तु नित्योनित्यानामित्यादि श्रुत्या जीवस्य नित्यत्वाङ्गीकारे बहिरङ्गाशक्तिदृष्ट्या जगतः सत्यत्वस्वीकारे च एकजीववादः निरस्तः । नित्यत्वेन, चेतनत्वेन, बहुत्वेन च जीवतत्त्वस्य श्रुतिप्रसिद्धत्वात् । "नात्मा जजान न मरिष्यति" इत्यादिषु श्रुतिवाक्येषु जीवात्मानः षड्भावविकाराः निवार्यंते । तथा च एवः हि विज्ञानात्मा पुरुषः' न हि विज्ञातुर्विज्ञातेः विपरिलोपो विद्यते" इत्यादिकं श्रुतिवाक्यं जीवस्य नित्यत्वे तात्पर्यमावहति । एवमपि जीवस्य चेतनत्वप्रतिपादकानि श्रुतिवाक्यानि च यथा—

जाग्रत्–स्वप्न–सुषुप्तिश्च गुणतो बुद्धिवृत्तयः
तासां विलक्षणो जीवः साक्षीत्वेन विनिश्चितः ।

निरस्तः । नित्यचेतनतया बहुजीवानां श्रुतत्वात् । २

स च जीवो नित्यज्ञानगुणकः "अविनाशी वारेऽयमात्मा अनुच्छित्तिधर्मेति । न हि विज्ञातुर्विज्ञातेर्विपरिलोपः विद्यते इति श्रुतेः । अणोरपि तस्य ज्ञानगुणेन सर्वाङ्गेषु व्याप्तिः । "गुणाद्वालोकवत्" इति सूत्रात् ।

---

एतेषां प्राणानां विज्ञानेन विज्ञानमादाय एषः द्रष्टा, श्रोता मन्ता विज्ञानात्मा पुरुषः "नित्यो नित्यानां चेतनश्चेतनानामित्यादेः । २

स च जीवः नित्यज्ञानगुणकः नित्यं ज्ञानमेव गुणः यस्य, ज्ञानस्वरूपमित्यर्थ । "ज्ञानाति एव अयं पुरुषः", विज्ञातारमरे केन विजानीयात । इति श्रुतिवाक्येभ्यः । अयमात्मा अनुच्छित्तिधर्मा उच्छेदरहितः नाम अविक्रिय इति भावः । नात्मा जजान न मरिष्यति नैधते, नापक्षीयते इति श्रुतेः न हि विज्ञातुर्विज्ञातेः विपरिलोपो विद्यते । अतः ज्ञानस्य यथैव नित्यत्वं, विज्ञातुः जीवस्य तथैव नित्यत्वम् । जीवात्मनः शरीर व्याप्यत्वं प्रदर्शयति– अणोरपीति । अथ "बालाग्रशतभागस्य" इति स्मृतिवाक्यानुसारं जीवस्य अणुपरिमाणत्वात, एकदेशस्थितत्वाच्च कथं सर्वशरीरव्याप्यत्वं तस्य इति चेत्— समादधाति— ज्ञानगुणेनेति ।

जीवात्मा अणुरपि, नितरां सूक्ष्मोऽपि ज्ञानगुणेन तस्य समस्त शरीर व्याप्यत्वं सम्भवति । 'गुणाद्वालोकवत" इति वेदान्तसूत्रोक्तेश्च । सूत्रस्यास्य अयं तावदभिप्रायः यद्यपि जीवचैतन्यमणुपरिमाणकं, चेतयितृलक्षणकेन चिद्गुणेन आलोकमिव, यथैव एकदेशस्थु लोक स्वप्रभया निकटवर्त्तिनं सर्वं प्रकाशयति, तथैव अणुस्वरूपोऽपि अखिलशरीरान्तवर्त्तित्वेन परिव्याप्तो भवति जीवात्मा । यथा शरीरस्य एकस्मिन् देशे स्थितोऽपि चन्दनबिन्दुः समग्रं शरीरमाह्लादयति, तद्वत् जीवचैतन्यं समस्तं शरीरावयवं व्याप्नोतीति । तत्र स्मृतिप्रमाणं दर्शयति —

यथा प्रकाशयत्येक कृत्स्नं लोकमिमं रविः

क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ।

इति भगवत्वाक्या । ३

अस्मदर्थश्च जीवात्मा बोध्यः । विलीनाहंङ्कारायां सुषुप्तौ अहमिति तत्स्वरूपविशेषात् । तथा च श्रुति सुख-महमस्वाप्सम् । न किञ्चित् अवेदिषम् । ४

देहादिविलक्षणश्च, षड्भावविकारशून्यः सः ।

नात्मा वपुः पार्थिवमिन्द्रियाणि

देवोह्यसुर्वायु जलं हुताशः

---

यथा रविः एकः निर्दिष्ट स्थानवर्त्तिरपि कृत्स्नं लोकं, समस्तं भुवनं प्रकाशयति आलोकयति, तथा तादृशेन प्रकारेण क्षेत्री जीवस्था तटस्था शक्तिः कृत्स्नं, सम्पूर्णं शरीरं व्याप्नोति । ३

जीवात्मनः अस्मद्प्रत्ययगोचरत्वं विदधाति । जीवात्मन पार-मार्थिकत्वस्वीकारात् अस्मदर्थत्वम् । अस्मद्प्रत्ययगोचररूपेण जीवः एव बोध्यः । अर्थात् अहमास्पदः जीवः एवेति । तत्र कारणं निर्दिशयति सुषुप्तौ, सुषुप्त्यवस्थायाम्, निद्रायां विषयाज्ञानदशा हि सुषुप्तिः । अर्थात् यत्र विषय विषयकं किमपि ज्ञानं नास्ति, सा सुषुप्तिरिति अभिधीयते । तस्यामेव-स्थायां अहंङ्कारस्य, बुद्धेरपि विलयः जीवे भवति । तत्र स्मृतिप्रमाणं दर्शयति सुखमहमिति । न किञ्चित् अवेदिषम् इत्यत्र विषय-विषयकं किमपि ज्ञानं न सम्भवति इति सूचितम् । सुखमहमस्वाप्सम्, इत्यस्मात् वाक्यांशात् अहमास्पदं विज्ञानं केवलमवतिष्ठते इति गम्यते । तच्च जीवचैतन्यम् । ४

सः जीवात्मा देहादि विलक्षणः, देहादिभ्यः भिन्नः, आदिपदेन इन्द्रिय-मनोबुद्धिप्रभृतयः गृह्यन्ते । षड्भावविकारशून्यः अर्थात् अविक्रियः ।

मनोगमात्रं धीषणा च सत्त्व
सहकृति स्वंक्षितिरर्थमाम्यमिति ।
नात्मा जजान न मरिष्यति
नैधतेऽसौ न क्षीयते
सवन विद् व्यभिचारिणां हि
सर्वत्र सस्वदनपाय्युपलब्धिमात्रम् ।

प्राणो यथेन्द्रियबलेन विकल्पितं सत् इति चैकादशात् । ५

परमात्मांशश्च सः ।

ममैवांशो जीवलोके जीवभूतः सनातनः ।

इति श्री भगवत्वाक्यात् । ६

---

षड्भावविकारश्च "जायते, अस्ति, वर्द्धते, विपरिणमते, अपक्षीयते, नश्यति इति । एतादृशविकारशून्यः आत्मा इति भावः ।

आत्मवस्तु देहादिक किमपि न इत्यत्र श्रुतिप्रमाण दर्शयति-नात्मेति । आत्मा न वाः, शरीरम्, न पार्थिवं, महदादेः आरभ्य पृथिव्यन्तं भूतपर्यन्तं यत् प्राकृतं वस्तु । नात्मा जजान, न जायते न मरिष्यति, न म्रीयते, न विनश्यति । नित्यत्वादित्यर्थः ।

न जायते म्रीयते वा कदाचित् नायं भूत्वा भविता वा न भूयः
अजो नित्यं शाश्वतोऽयं पुराणः न हन्यते हन्यमाने शरीरे ।

इत्यादिभ्यः श्रुति-स्मृतिभ्यः आत्मनः नित्यत्वं सिद्धम् । नैधते, न वर्द्धते, न क्षीयते, सवनविदव्यभिचारिणां, हि व्यभिचारिणां, परिवर्त्तनशीलानां, कौमार-यौवन-जरा-प्रभृतीनाम् अवस्थानां प्रेक्षकः एव । अणुपरिमाणक जीवचैतन्यं निरवस्थमपि प्रतिपादयति शश्वदनपायूपलब्धीमात्रम् इति । ज्ञानैकरूपमिति भावः । ५

सः, पूर्वोपलक्षितः तटस्थाशक्तिस्वरूपः जीवः परमात्मनः अंशविशेषः । "ममैवांशो जीवलोकः जीवभूतः सनातनः" इत्यादिना जीवः सर्वेश्वरस्यैव अंशः । 'एव' पदनिवेशनेन ब्रह्मरुद्रादीनां व्यावर्त्तनम् । जीवलोकः प्रपञ्चस्थितो जीवः सनातनो, नित्यो । न तु घटाकाशादिवत् कल्पितः इत्येवंरूपेण श्रीमद् भगवत्गीतासु अर्ज्जुनं प्रति भगवतः श्रीकृष्णस्योक्तिः । ६

कर्त्ता भोक्ता च सः। विज्ञानं यज्ञं तनुते, कर्माणि तनुतेऽपि च। सोऽश्नुते सर्वान् कामान् इति च श्रवणात्। यत्तु प्रकृतिः कर्त्री, भोक्ता तु जीवः इत्याहुस्तन्मदम्। कर्त्तृत्वभोक्तृत्वयोः एकनिष्ठत्वात्। यदाह वनपर्वणि सोमकं यमः,–

"नान्यः कर्त्तुः फलं राजन्नुपभुंक्ते कदाचन। ७

ननु कर्त्तृत्वे दुःख सम्बन्धात् न तत्र श्रुतेः तात्पर्यमिति

---

सः जीवः खलु अविशुद्धिः कर्ता इति उच्यते जीवस्य कर्त्तृत्वे च स्मृति-प्रमाणं "एकस्य वाऽक्षरस्य प्रशासने गार्गि नद्यः स्यन्दन्ते। एवः द्रष्टा, श्रोता, मन्ता, विज्ञानात्मा पुरुषः। विज्ञानं यज्ञं तनुते। कर्माणि तनुतेऽपि च इत्यादीनां वाक्यानां जीवस्य कर्त्तृत्वे प्रमाणम्। तथा च जीवस्य भोक्तृत्वं प्रमाणयति श्रुतिः। यो वेदेन जिघ्राणति सः आत्मा इति। सः अश्नुते सर्वान् कामान्। इत्यत्र जीवः कर्मफलस्य भोक्ता इति उच्यते। प्रधानस्य कर्त्तृत्वं निरस्यति— यत्तु इति। सांख्यानां मतानुसारं प्रकृतिः कर्त्रीति निरस्यति। जीवः भोक्ता। सिद्धान्तिभिश्च तत्राभिमतमतन्मन्दमिति। अर्थात् तन्न समीचीनम्। कर्त्तृत्व—भोक्तृत्वयोः एकनिष्ठत्वात्। य एव कर्मकर्त्ता स एव तादृशस्य कर्मणः फल भोक्ता। "पुरुषो प्रकृतिस्थो हि भुंक्ते प्रकृतिजान् गुणान्" इति स्मृतेः। तत्र स्मृतिप्रमाणं दर्शयति — सोमकं यमः कथयति नान्यः कर्त्तुः फलं भुंक्ते। अर्थात् अन्यः कश्चन, कर्त्तुः फलं न भुंक्ते-स्मृतिश्च—

अवश्यमेव भुक्तव्यं प्राप्तकर्मशुभाशुभम्।
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि॥

इत्यत्र कर्मफलस्य भोक्ता जीव इति प्रतिपद्यते। ७

जीव-कर्त्तृत्वे दुःखसम्बन्धात् तस्य कर्त्तृत्वमिति मतं निराकरोति नन्विति। कर्त्तृत्वगतं दुःखं सुखस्वरूपे जीवचैतन्ये न सम्भवति इति चेत् न।

चेत्-नैवमेतत् । तथा दर्शादिषु अपि अतात्पर्यापत्तेः । लीलोच्छ्वासासादेरकरण एव तत् सम्बन्ध-वीक्षणाच्चेति । ८

न च निष्क्रियत्वश्रुत्या कर्त्तृत्वं जीवस्य वाध्यते। अस्ति भाति विदिधात्वर्थानामात्मनि सत्वेन निष्क्रियत्वासिद्धेः । धात्वर्थो हि क्रियेत्याहुः । न च निर्विकारत्वश्रुत्या तस्य तद्बाध्यते त्ताभान ज्ञानगुणाश्रयत्वेऽपि द्रव्यान्तरता पत्तिरूपस्य विकारस्य तत्राप्रसङ्गात् । यथा संयोगाश्रयत्वेपि

---

तथा सति यदि एकः करोति, अन्यः फलं भुङ्क्ते, तर्हि कृतप्रणाशाकृताभ्युपगमदोषापत्तिः । दर्शादिषु यज्ञेषु तादृशप्रसङ्गात् च । अर्थात् एकः यज्ञं करोति अन्यः तत्फलं भुङ्क्ते, इत्येतादृक् परिकल्पनं न समीचीनम् ।

श्रूयते च अग्निहोत्रादिकं कर्म येनैव क्रियते तस्य फलमपूर्वमाध्यमेन तेनैव भुज्यते । दृश्यते च लोके लीलया केनापि पुरुषेण यदि श्वासरुद्धादिक क्रियते, तज्जनितं दुःखं तेनैवोपभुज्यते । कर्त्तृत्व—भोक्तृत्वयोः वैयधिकरण्यमनुपपत्तेः । ८

निष्क्रियत्वश्रुत्या जीवस्य कर्त्तृत्वं बाध्यते इति मतं परिहरति—अस्तीति । शुद्धचिन्मात्रस्यापि जीवस्य निष्क्रियत्वं नैव सम्भवति । अस्ति नाम वर्त्तते, भाति प्रकाशयति इति "अस्ति भाति प्रियं" इत्यादिश्रुत्या धात्वर्थप्रयोगात् । धात्वर्थो हि क्रियेत्याहुः । निर्विकारत्वश्रुत्या जीवस्य कर्त्तृत्वं न बाध्यते इति दर्शयति । सत्तागुणेन ज्ञानगुणेन च जीवात्मा शरीरावयवेषु परिव्याप्तो भवति । तत्रोदाहरणं दर्शयति—अखिलवस्तुभिः सह आकाशस्य संयोगाश्रयत्वेऽपि तस्य विकारित्व नैव सम्भवति । तथा आकाशवत् जीवस्य स्थूलक्रियाश्रयत्वेपि न विकारित्वप्रसङ्गः । जिवात्मनः साक्षीस्वरूपं कर्त्तृत्वं दर्शयति—सुषुप्त्यवस्थायामपि "सुखमहमस्वाप्सम्"

आकाशे न कोऽपि विकारस्तथा स्थूलक्रियाश्रयत्वे सः नात्मनिति द्रष्टव्यम् । सुषुप्तावपि सुखज्ञात्वसाक्षीतरूपं कर्तृत्वमस्तीति पारमार्थिकं जीवस्य तत् । ९

तच्चेश्वरायत्तं बोध्यम् एष एव साधुकर्म कारयति । इत्यादि श्रुतेः । परात्तु तच्छ्रुतेरिति सूत्राच्च । १०

स च जीवः भगवद्दासो मन्तव्यः । "दासभूतो हरेरेव नान्यस्यैव कदाचनेति" पाद्मात । ननु सर्वेषां जीवानां तद्-दासत्वे स्वरूपसिद्धे निर्विशेषे च सति उपदेशादेः वैयर्थ्यमिति

इत्यत्र सुखज्ञानस्य साक्षीत्वेन जीवात्मनः कर्तृत्वं वर्त्तते । स्मृतिप्रमाण च तत्र

"जाग्रत्—स्वप्न—सुषुप्तिश्च गुणतो बुद्धिवृत्तयः
तासां विलक्षणो जीवः साक्षीत्वेन विनिश्चितः ।

सत्यमेतत जीवस्य कर्तृत्वं पारमार्थिकम । अर्थात् जीवस्य कर्तृत्वं भोक्तृत्वे च नैव संशयस्यावसरः इति । ९

जीवस्य कर्तृत्वं ईश्वराधीनमिति निर्द्धारयति—तच्चेति । एषः एव साधुकर्म कारयतीति । "परात्तुतच्छ्रुतेरिति तत्श्रुतेरिति ब्रह्मसूत्राच्च परमात्मना प्रेरितत्वात् जीवस्य शुभाशुभकर्मकर्तृत्वं सिद्ध्यति । १०

स च अणुचैतन्यस्वरूपः जीवः भगवद्दासः मन्तव्यः । उभयो नित्यसेव्य-सेवकभावः वर्त्तते इत्यर्थः । "दासभूतो हरेरेव नान्यस्यैव कदाचन" इति स्मृतेः । "नान्यस्यैव" इत्येव पदं निश्चयार्थकम । नूनमेव हरेः दास जीवः इति भावः । जीवः सिद्धः भगवद्दासः इति निर्णितेऽपि शास्त्राणां प्रयोजनं दर्शयति—नन्विति । जीवस्य तद्दासत्वे, हरेः दासत्वेन स्वरूपसिद्धेः, स्वरूपेण सिद्धत्वात् उपदेशानां शास्त्रवाक्यानां वैयर्थ्यं, निरर्थकतापत्तिरिति चेत्—न शास्त्रतात्पर्यं दर्शयति—तदभिव्यञ्जकत्वे नेति ।

चेन्न तदभिव्यञ्जकत्वेन तस्य सार्थक्यात्, न हि मथनेन विना दधिसर्पी–अरणौ च वह्निराविर्भवेति इति । ११

स च जीवो गुरूपसत्त्या तदवाप्तया हरिभक्त्या च पुरुषार्थो भवति ।

यस्य देवे पराभक्तिः यथा देवे तथा गुरौ
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः इति । तेh

---

दुग्धे घृतभावः नित्यसिद्धोऽपि मथनं विना तन्नोत्पद्यते । विद्यमानेऽपि काष्ठे वह्नेः सद्भावः घर्षणं विना तस्य अभिव्यक्तिः नैव सम्भवति । तद्वत् विना शास्त्रोपदेशं स्वरूपसिद्धमपि भगवत्दासत्वं मायावृत्तं सत नैवाभिव्यज्यते । तदभिव्यक्तये शास्त्रोपदेशस्यावश्यकता अवश्यम्भावीति राद्धान्तः । ११

भगवत् दासत्वज्ञापनार्थं गुरुपादाश्रयस्य प्रयोजनं निर्द्धारयति गुरूपसत्त्येति । गुरुपादाश्रयेण तदवाप्तया गुरुप्रसादलब्धहरिभक्त्या च प्रेमभक्तिप्राप्तिवशेन जीवः पुरुषार्थो भवति । गुरुपादाश्रयस्य प्रयोजनं दर्शितं श्रीमद्भागवते –

"विजितहृषीकवायुभिरदान्तमनस्तुरगं
य इह यतन्ति यन्तुमतिलोलमुपायखिदः ।
व्यसनशतान्विताः समवहाय गुरोश्चरणं
वणिज इवाज सन्त्यकृतकर्णधरा जलधौ ।"

पुरुषार्थो भवति इत्यनेन न चतुर्वर्गफलस्याधिकारी भवति जीवः इत्यर्थः । अपि तु पुरुषार्थचतुष्टयव्यतिरिक्तं परमतमपुरुषार्थभूतं भगवत्प्रीत्याख्यं प्रेमभक्तिरूपं पञ्चमं पुरुषार्थं प्राप्नोति इत्यर्थः । अथ कथं न पुरुषार्थचतुष्टयस्य तत्र ग्रहणमपितु तद व्यतिरिक्तस्य पञ्चमस्य इति चेत् — श्रीमद्भागवते उक्तमस्ति

"आचार्य्यवान् पुरुषो वेद" । तस्य तावदेव चीरं यावन्न विमोक्षेऽथसम्पत्स्य इति । श्रद्धा–भक्ति–ज्ञानयोगात् अवैति इति ।

ततस्तु तं पश्यते निष्फलं ध्यायमानः इति च श्रुतेः ।

–तस्मात् गुरुं प्रपद्येत जिज्ञासु श्रेयः उत्तमम्
शाब्दे परे च निष्णातं ब्रह्मण्युपसमाश्रयम्

---

सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत
दीयमानं न गृह्णाति विना मत्सेवनं जनाः ।
ब्रह्मवैवर्त्ते— च ब्रह्मत्वादपि देवत्वादिन्द्रत्वादमरादपि
अमृतात् सिद्धिलाभाच्च हरेर्दास्यं सुदुर्लभम ।

श्रीगुरौ भक्त्युत्कर्षं भगवत्प्रीतिलाभाय कारणमिति दर्शयति यस्येति । यस्य प्राणिन स्वस्य इष्टदेवकृते यादृशी पराभक्तिः, अनपायिनी प्रीतिः वर्त्तते । तादृशी प्रीतिरपि गुरुचरणारविन्दे अस्ति, तस्य पुरुषस्य हृदये एव कथिताः गुरुपदिष्टाः उपदेशाः प्रकाशन्ते । गुरुभक्तिप्रभावेण एव शास्त्ररहस्यमवगम्यते इति भाव । तत्र श्रुतिप्रमाणं दर्शयति—आचार्यवानिति । आचार्यवान्, आचार्यपदाश्रयी व्यक्तिः केवलं वोद्धुं अखिलवेदार्थान् अवशक्यते इति । — कस्तावत आचार्य इति आकांक्षायामाह—

शास्त्रोक्त धर्ममुचार्य स्वयमाचरते यदा
अन्येभ्यः शिक्षयेद्यस्तु स आचार्यो निगद्यते ।

कैवल्योपनिषदि च — ध्यायमानः पुरुषः निष्कलं, कलङ्करहितं निर्मलं पुरुषं पश्यति । तस्मात् जगतः दुःखमयत्वात् उत्तमं श्रेयः जिज्ञासु गुरुं प्रपद्येत । शरणं गच्छेत । तन्माध्यमेन एवं परंब्रह्म उपास्यं प्राप्नोतीति आचार्यवर्यं शङ्करपादैः शिष्यद्वारेण गुरौ प्रपन्नत्वमुपदर्शितम् —

तत्र भागवतान् धर्मान् शिक्षेद् गुर्वात्मदैवतः

अमाययानुवृत्त्या यैस्तुष्येदात्मात्मदो हरिः ।

इति स्मृतेश्च । १२

सा च भक्तिः शास्त्रज्ञानपूर्विकैवानुष्ठेया । "तमेव धीरो विज्ञाय प्रज्ञां प्रकुर्वीत ब्राह्मणः" इति श्रवणात् । ते च "जीवाः मुक्तावपि हरिमुपासते" । "एतत् साम गायन्नास्ते",

---

दुर्वार-संसार-दावाग्नितप्तं दोधूयमानं दुरदृष्टवातैः

भीतं प्रपन्नं परिपाहि मृत्योः शरण्यमन्यं यदहं न याने ।

श्रीमद्भागवतस्य एकादशस्कन्दे च श्रीगुरुसकाशात् भागवतधर्म शिक्षेत इत्युक्तमस्ति । अतः गुरूपसत्त्या एव भगवद्भक्तिः नान्यथा । १२

सा च हरेः अनपायिनी भक्तिः शास्त्रज्ञानपूर्विका, केवलं भक्तिशास्त्र-ज्ञानमाध्यमेन साध्या, दोष्या, उक्तञ्चैवम्—

"श्रुति-स्मृति पुराणं च पञ्चरात्रविधिं विना

ऐकान्तिकी हरेर्भक्तिरुत्पातायैव कल्पते ।

'तमेव धीरो विज्ञाय" इत्यादौ श्रुतिवाक्यं यद् "ब्राह्मण" पदं विन्यस्तम् तत्तु उपलक्षणमात्रम् । अथ किं नाम उपलक्षणमित्यत्राह "स्व-बोधकत्वे सति स्वेतरबोधकत्वमुपलक्षणम" यथा "काकेभ्यः दधि रक्षताम" इत्युक्तेः काकव्यतिरिक्तेभ्यः अन्येभ्यः दध्युपघातकेभ्योऽपि दधि रक्षणीयमित्यव-गम्यते, तथा "ब्राह्मण" पदेन जीवमात्राधिकारीति सूच्यते । इति शास्त्रान्तरे चोक्तमस्ति –

"शास्त्रतः श्रूयते भक्तौ नृमात्रस्याधिकारिता ।

जीवमात्रं भक्तिविषये अधिकारी इति भावः । ते च जीवाः मुक्त्यवस्थायामपिहरिमुपासते । "मुक्ता अपि लीलया विग्रहं कृत्वा हरिं

"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इति श्रवणात्। १३

इत्थं च तदनुभविनां सदासत्वात् तद्रूपगुणविभूतीनां लावण्यचन्द्रिकात्वप्रसङ्गः। तदित्थं विभुत्वाणुत्वाविमिथोविरुद्धशास्त्रैकगम्यनित्यगुणयोगादीश्वरजीवयोर्भेदः सार्वदिकःसिद्धः। १४

ननु किमिदमपूर्वमुच्यते। ईश्वरादन्यो जीव इति "त्वं

---

भजन्ते" इति वाक्यात्। सदा सूरयः, धीराः विष्णोः परमं पदं पश्यन्तीति ॥

इत्थञ्चानेन प्रकारेण तदनुभविनां भगवद्गुण-रूप-विभूत्यनुभव-कारिणां शुक-सनकादीनां मुक्तपुरुषाणां सदासत्वात्, दासत्वेन सह वर्त्तमानात् तेषां मुक्तपुरुषाणामपि दासभावत्वात् जीवब्रह्मणोः पारस्परिकः भेदः पारमार्थिकः एवेति सिद्ध्यति। तस्मादेव तद्रूपगुणविभूतीनां, भगवद्रूप-गुण-विभूतीनां लावण्यचन्द्रिकात्वप्रसङ्गः, परिपोषत्वमेवेति। विष्णुधर्मे च उक्तमस्ति "न देशनियमस्तत्र न कालनियमस्तथा"। अर्थात मुक्त्यवस्थायामपि सः हरि भजनीय इति भावः। जीवब्रह्मणोः भेदं निर्दिशति—इत्थमिति। विभुत्वाणुत्वादिमिथो विरुद्धत्वात्। ईश्वरः विभुचैतन्यरूपः। जीवस्तु अणुचैतन्यस्वरूपः। ईश्वरः सर्वज्ञः। जीवः अल्पज्ञः। तत्र श्रुतिरपि पठति—

ऋतं पिबन्तौ सुकृतस्य लोके गुहाप्रविष्टौ परमे परार्द्धे।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः॥

"छायातपो" इत्यत्र जीव-ब्रह्मणोः यथाक्रमं अल्पज्ञत्वसर्वज्ञत्वादयः गुणाः विवक्षिताः। अतः उभयोः भेदः सार्वदिकः सर्वदा मुक्त्यवस्थायामपि सिद्ध्यति। १४

जीव-ब्रह्मणोः अभेदज्ञानमपाकर्त्तुं, प्रथमं पूर्वपक्षम् उपस्थापयति—

वाऽहमस्मि भगवो तद् योऽहम्, सोऽसौ, योऽसौ, सोऽहं, तत्त्व-मसीति व्यवहारदशायाम् "यत्रत्वस्य सर्वमात्मैवाभूत् तत्र केन कं पश्येदिति" मोक्षदशायाञ्च तयोरभेद-श्रवणात् । भेदस्यावस्तुत्वात् ग्राही निन्द्यते । यदेवेह तदमुत्र यदमुत्र तदन्विह मृत्योः सः मृत्युमाप्नोति य इह नानेव पश्यति ।" यदा ह्येवैष उदरमन्तरं कुरुते अथ तस्य भयं भवतीत्यादिश्रुतौ ।" १५

नैतच्चतुरम् ।

"द्वा सुपर्णा सजुजा सखाया समानं वृक्षं परिषस्वजाते

---

नन्विति । ईश्वरात् जीवस्य भेदः वर्त्तते इति नैव ग्रहणीयम् । त्वं वा अहमस्मि, अर्थात् त्वं परमात्मा अहं जीवः अस्मि इति निर्विशेषवादिनां, अद्वैतवादिनामतमुपस्थापयति श्रुतिप्रमाणमुखेन न्यस्यति । "यत्र सर्वं खलु इदं ब्रह्म", तत्रद्रष्टा —दृश्ययोः दृश्य—दर्शनयो, द्रष्टा-दर्शनयोश्च न कोऽपि भेदः । अन्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यम । अन्तःकरणवृत्त्यवच्छिन्न चैतन्यं प्रमाणचैतन्यम । विषयावच्छिन्नं चैतन्यं प्रमेयचैतन्यम । परन्तु प्रमातृत्वाद्युपाधिविनाशेन चैतन्यमात्रं सर्वत्रावशिष्यते ।

तत्र उक्तमस्ति—घटे नष्टे यथा व्योम व्योमैव भवति स्वयम्

तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित् स्वयम् ।

यत्र सर्वं आत्मैवाभूत, यदा ब्रह्मव्यतिरिक्तं किमपि नास्ति इत्येवंजातीयकः अनुभवः । तत्र केन कं पश्येत, केन कं वीजानीयात । न किमपि इति भावः । मृत्योः सः मृत्युमाप्नोति यः इह नानेव पश्यति । अर्थात् सः जन्म—मृत्युरूपावर्त्तने पतति, यः नानेव पश्यति । १५

अद्वैतवादिनः मतं खण्डयति—नैतदिति । एतादृशः अभिप्रायः न समीचीनः । द्वासुपर्णा इत्यादौ जीवब्रह्मणोः स्पष्टभेददर्शनात । समानवृक्षस्वरूपे देहे सख्यसम्बन्धविशिष्टौ पक्षिणौ जीव—परमात्मनौ नित्यं विराजेते । तत्र एको

तयोरन्य पिप्पलं स्वादत्त्यनश्नन् अन्यो अभिचाकशीतीति"

पूर्वस्यां, "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेः विजानत आत्मा भवति गौतम। निरञ्जनः परम-साम्यमुपैति इति परस्यां च तयोः भेदश्रवणात्। १६ भगवता च मुक्तौ जीव-ब्रह्मणोः भेदः स्मर्यते।

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च

इत्यादौ। "ब्रह्मैव सन् ब्रह्माप्येति" इत्यादौ ब्रह्मसदृशः सन्नित्येवार्थः। सुघटस्तत्रैवशब्दस्य सादृश्य एवार्थः, इ तरथा

---

जीवात्मा पिप्लं स्वकीयं शुभाशुभं कर्मफलं भुङ्क्ते। यतो हि —

अवश्यमेव भोक्तव्यं प्राप्तकर्म शुभाशुभम्
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि।

परन्तु अन्यः परमात्मा स्वकीयेन, नित्यशुद्ध-बुद्ध-मुक्तगुणेन अनश्नन् तादृशं कर्मफलं अभुञ्जानः अभिचाकशीति सर्वतोभावेन साक्षीत्वेन देदीप्यते इत्यत्र भेदः स्पष्टः एव। १६

मुक्त्यवस्थायामपि जीवस्य ब्रह्मणःसकाशात् भेदो वर्त्तते इति दर्शयति। यथा शुद्धजलं शुद्धजले सिक्तं सत् तादृगेव भवति तथा ब्रह्मवित् ब्रह्म इव भवति। सालोक्यादिकं लभते इति भावः। हे मुने! गौतम! ब्रह्मविजानद्व्यक्तिभिः परमात्मनः सादृश्यं लभ्यते एव। अतो भेदः स्पष्टः एव। १६

मुक्त्यवस्तायामपि जीव-ब्रह्मणोः भेदः उच्यते। इदं, ब्रह्मविद्याख्यं ज्ञानमधिकृत्य मम साधर्म्यमागताः, साधर्म्यं सारूप्यलक्षणां मुक्तिमवाप्य, सर्गे, सृष्टिकाले नोपजायन्ते, नोत्पद्यन्ते। प्रलये, सृष्ट्यन्तकाले न व्यथन्ति। नैव विनश्यन्ति। ब्रह्मैव सन् ब्रह्माप्येति,। ब्रह्म इव सन् सारूप्यसालोक्यादि-

ब्रह्मभावोत्तर ब्रह्माप्ययो विरुद्धः स्यात् । यदेवेहेत्यादौ ब्रह्माविर्भावेषु भेदग्राही निन्द्यते । यदाह्येवेत्यादौ ब्रह्मणि कपटं प्रतिसिद्ध्यते इति न कापि क्षतिः । १७

एवं सति "त्वं वा अहमस्मि इत्यादौ तयोरभेदः प्रतीतः, स खलु तदायत्तवृत्तिकत्वतद् व्याप्यत्वाभ्यां सङ्गच्छेत । यथा प्राणसम्वादे प्राणायत्तवृत्तिकत्वाद् वागादेः प्राणरूपता पठ्यते, छान्दोग्ये "न वै वाचो, न चक्षुंसि, न श्रोत्राणि, न मनांसीत्याचक्षते, प्राण इत्येवाचक्षते, प्राणो ह्येवैतानि सर्वाणि भवतीति यो यद्व्याप्यः स तद्रूपः स्मर्यते वैष्णवे ।

---

कमवाप्य ब्रह्माप्येति, ब्रह्मप्राप्नोति । जीव-ब्रह्मणोः स्पष्टः भेदो वर्त्तते इति भावः । अथ एव शब्द कथं सदृशार्थत्वमिति चेत् - उच्यते । एव शब्दस्य सदृशार्थकत्वं युज्यते । "एवौपम्ये परिभवे इषदर्थेऽवधारणे" इति हैमः । इतरथा एव शब्दस्य अन्यार्थकल्पने ब्रह्मभावोत्तर ब्रह्माभावमवाप्य ब्रह्माप्ययो, ब्रह्मप्राप्तिः, अर्थात् ब्रह्मैव सन् ब्रह्माप्येति इत्यादिनां वाक्यानां विरुद्धः स्यात् अनर्थापत्तिरिति । ब्रह्माविर्भावामस्यादीयं ततो भेदग्राहिणो नित्यान्ते यदा ह्यंवेत्यादौ ब्रह्मणः अलीकत्व निषिध्यते इति न कापि हानिः । १७

"त्वं वा अहमस्मि" इत्यादि वाक्यानां अद्वैतपरकत्व निवारयति—एवमिति ।

त्वं वा परंब्रह्म अहं जीवः अस्मि इत्यादौ स्थले जीवस्य ईश्वरायत्त-वृत्तिकत्वं, अर्थात् ईश्वराधीनतया जीवस्य कर्त्तृत्वमिति भावः व्यापकसतायां ईश्वरस्य सर्वत्र सद्भावत्वं चोदयति वाक्यमिदम् । अन्यथा अद्वैतत्वस्य हानिः स्यात् । यथैव प्राणसम्वादे चक्षुरादीनां प्राणायत्तवृत्तिकत्वात् प्राणपरत्वमेव, तद्वत्, अर्थात् जीवानां ईश्वरायत्तवृत्तिकत्वात् तत्परत्वं सिद्धम् ।

"योऽयं तवागतो देव समीपं देवतागणः
स: त्वमेव जगत्स्रष्टा यतः सर्वगतो भवान्
गीतासु च– सर्वं समाप्नोषि ततोऽसि सर्व इति। यत्र त्वस्येत्यत्र तु मुक्तस्य जीवस्य विग्रहेन्द्रियादिकं सर्वं भगवत् संकल्पादेव भवतीत्युच्यते। अन्यथा सर्वमित्येतद्व्याकुप्यत्॥18॥

यत्तुवदन्ति त्वं वा अहमस्मि इत्यादौ जहदजहत्स्वार्थ-लक्षणया विभुत्वाणुत्वादीन् गुणान हित्वा चैतन्यमात्रं

---

व्याप्यस्य व्यापकवृत्तित्वं श्रुतिप्रमाणेन साधयति "न वै वाचो" इति। वागाद्यनामिन्द्रियाणां स्वतन्त्रा स्थितिः न विद्यते, तेषां प्राणमात्रपरत्वात्। विष्णुपुराणे चोक्तमस्ति य: यद्व्याप्यः सः तद्रूपमिति। अतः अखिलं जगत ब्रह्मव्याप्यतया जगत ब्रह्मस्वरूपमेव। तथा हि शक्तिशक्तिमतोः अभेद-सम्बन्धदृष्ट्या च जीव: ब्रह्मस्वरूप:। तथा च विष्णुं प्रति देवानामुक्तिः— योऽयं देवगणः तवसमीपमागत: स: त्वमेव। सर्वेषां देवानामपि त्वदायत्त-वृत्तिकत्वम। अत: त्वमेव जगतः स्रष्टा।

शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्त्तते
मैत्रेय! भगवत् शब्दः सर्वकारणकारणम्।

भगवद्गीतासु च सर्वं समाप्नोषि, परिव्याप्तः असि, ततोऽसि सर्वरूपेणत्व विद्यमानः असि इति सर्वेषां पदार्थानां ईश्वरव्याप्यत्वं सिद्धम्। १८

विभुत्वाणुत्वादीन् गुणान् आधारीकृत्य जीव - ब्रह्मणोः पारस्परिकः भेद: सिद्ध्यति इति समर्थयति— यत्तु इति। यत्तु केषांचित मतानुसारं "त्वं वा अहमस्मि इत्यादौ जहदजहत्लक्षणा भवति। यथा "सोऽयं देवदत्त" इति वाक्येन स: इति पदेन तद्देशकालावच्छिन्न:, अयं पदेन एतद्देशकालावच्छिन्नः देवदत्तः उक्तः। परन्तु तदेतद्देशकालावच्छिन्नत्वपरिहारेण देवदत्तमात्रग्रहणेन

लक्षणीयमिति, तन्मन्दम्। नित्यगुणानां वाङ्मात्रेण हानासम्भवात सर्वशब्दावाच्ये लक्षणायाः अयोगाच्च। तदवाच्यं खलु त्वया ब्रह्माभ्युपगम्यते। १९

"यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इत्यादि श्रुतिरेव ब्रह्मणस्तथात्वमाह, मैवमेतत्, कृत्स्नावाच्यताया-

---

न कोऽपि विरोधः। तद्वत् "त्वं वा अहमस्मि" इत्यादौ सर्वज्ञत्वाल्पज्ञत्वादीन् गुणान् विभुत्वादीन् गुणांश्च हित्वा' त्यक्त्वा चैतन्यमात्रंलक्षणीयमिति। अतः शुद्धचिन्मात्रमवशिष्यते इति अद्वैतिनामभिप्राय.। तत्र सिद्धान्तं विदधाति—तन्मन्दमिति. तन्न समीचीनम्। ईश्वरसकाशात् तस्य गुणानां पृथकत्वं निवारयति। नित्यगुणानां, विभुत्वाणुत्वादिनां, वाङ्मात्रेण, केवलं वचनमात्रेण हानं, परिहारः न सम्भवति। यथैव ईश्वरो नित्यः तथैव तस्यः गुणाः नित्याः, भगवद्गुणविभूतीनां न तस्य सकाशात भिन्नत्वम। उक्तञ्चैवम् "यथोदकं दुर्गेवृष्टं पर्वतेऽनुविधावति। एवं धर्मान् पृथक् पश्यंस्तथैवानुविधावति"। एवं ब्रह्मधर्मानुक्त्वा तदभेदः निषिद्ध, इति प्रागेव उक्तत्वात यथैव ब्रह्म नित्यं, तथैव तस्य गुणा अपि नित्याः। एवं च यथा जीवः नित्यः तस्य गुणाश्च नित्याः, केवलं कथनमात्रेण तादृशानां गुणानां परिहारकरनं जडश्लाघ्यमेव। ब्रह्मविषये लक्षणापि न सम्भवति इति निर्द्धारयति—सर्वशब्दावाच्येति। सर्वं खलु इदंब्रह्म इत्यत्र सर्वशब्दावाच्ये नाम सर्वशब्दाभिधेये, ब्रह्म सर्वशब्दावाच्यं भवितु नार्हति इत्यनेन शब्दावाच्ये परंब्रह्म विषये लक्षणा भवितुं न युज्यते। तस्या मुख्यार्थवाधपूर्विकात्वसिद्धेः। यत्र मुख्यार्थः नास्ति तत्र लक्ष्यार्थः न सम्भवति। ब्रह्मणः शब्दावाच्यत्वमेव अद्वैतिनामभिमतमिति न शोभते "शास्त्रयोनित्वात्"। १९

ब्रह्मणः शब्दावाच्यत्वं निराकर्त्तुं पूर्वपक्षमुपस्थापयति नन्विति। अद्वैतवादिनामयंतावदभिप्रायः यत् "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा

स्तत्राभिधानात् यदुक्तं श्रीभागवते "कात्स्न्र्येन नाजोऽप्यभिधातुमीश इति। अन्यथा "सर्वे वेदा यत् पदमामनन्ति इति श्रुतिः" "वेदैश्च सर्वैरहमेव वेद्यः" इति स्मृतिश्च व्याकुप्येत्। तत्रैव वाक्ये यत इति अप्राप्येति च विरुध्येत। २०

यत्त्वविद्यावच्छिन्नमविद्याप्रतिबिम्बित वा ब्रह्मैव जीवः, आकाशमेकं हि यथा "घटादिषु पृथक् पृथग् भवेत्। "तथात्मैकोह्यनेकस्थो जलधारेष्विवांशुमान्" इत्यादि श्रुतेः।

---

सह" इत्यादिश्रुतिवाक्येन ब्रह्मणः शब्दावाच्यत्वमभिप्रेयम, इति चेत्— न। तत्र कृत्स्नतया शब्दावाच्यत्वं अभिहितम,

"यस्यामतं तस्य मतं मतं यस्य नवेद सः" इति श्रुतिप्रमाणात्। ब्रह्मणः कृत्स्न गुण न केनापि ज्ञातुं शक्यते इति भावः। श्रीमद्भागवत चोक्तमस्ति, कात्स्न्र्येन सम्पूर्णरूपेण, अजः, परमेश्वरः अभिधातुं न शक्यते अन्यथा यदि ब्रह्म शब्देन अवाच्य स्यात् तर्हि 'सर्वे वेदाः यत पदमामनन्ति," वेदैश्च सर्वैः अहमेव वेद्यः"। इत्येतेषां श्रुतिस्मृतिवाक्यानां अनर्थापत्तिः। वेदपदेन स्मृतिशास्त्रपुराणेतिहासानां उपलक्षणम्। सर्वैः शास्त्रैः परंब्रह्म एव वेद्यम्। यतः इति अवधिनिर्णयात नूनं ब्रह्मणः शास्त्रवेद्यत्वं सिद्ध्यति। २०

स्थूणाभिखनन न्यायेनअद्वैतीन मतमपाकत्तृ पुनः अद्वैतसमर्थितं प्रतिबिम्बवादं निराकरोति। यत्तु इति, ब्रह्मणः सर्वव्यापकत्वात् तस्य यः एव अंशः अविद्यावच्छिन्नः, तस्यैवांशस्य जीवत्वापत्तिः। यथा एकमेवाकाशं घटाद्यवच्छिन्नतया भिन्नं भिन्नं सत् घटाकाशमठाकाशरूपेण प्रतिविभाति। तद्वत् ब्रह्मणः यः एव अंशः अविद्यावच्छिन्नः स एव जीवः। परन्तु

तद्विज्ञानेनाविद्याविनाशे तु तदद्वैतं सिद्धं घटाद्युपाधिविनाशे सत्याकाशाद्यद्वैतवदिति वदन्ति। तदसत् । जडयाविद्यया चैतन्यराशेरच्छेदायोगात्, निरूपस्य विभोः प्रतिविम्बा-योगाच्च । अन्यथा वायुदिगादेस्तदापत्तिः । आकाशस्तज्ज्यो-

---

वास्तवतया जीव ब्रह्मणोः न कोऽपि भेदः। तत्र प्रतिविम्बवादिनां मतं श्रुतिप्रमाणेन दर्शयति —

एको एव हि भूतात्मा भूते भूते व्यवस्थितः

एकधा वहुधा ब्रह्म दृश्यते जल-चन्द्रवत् ।

अनेनैव श्रुतिवाक्याधारेण प्रतिविम्बं स्वीकरोति वेदान्तैकदेशी। यथा एकमेव आकाशं घटाकाशपटाकाशादिभेदेन भिन्नं सत् पुनः, घटपटा-द्युपाधिविनाशेन महाकाशमात्रमवशिष्यते, तद्वत् अविद्यानिवृत्यनन्तरं जीवाद्युपाधिविनाशेन शुद्धचिन्मात्रस्वरूपमेव सिद्ध्यति ।

तत्र श्रुतिप्रमाणं दर्शयति जलाधारेषु अंशुमान् इव। अर्थात् जलाधारेषु चन्द्रस्य प्रतिविम्बमिव परस्य ब्रह्मण प्रतिविम्बस्वरूपः जीवः इति सिद्धान्तं विदधाति;-तदसविति। एतादृक मतं न समीचीनम् । ब्रह्मणः अविद्यावच्छिन्नत्वं खण्डयति जडयेति । जडया अविद्यया चैतन्यराशेः, चैतन्यमात्रस्वरूपस्य अवच्छेदायोगात्, ब्रह्मण अविद्यावच्छिन्नत्वं अनर्हम् इति भावः। जीवस्य प्रतिविम्बरूपत्वं निराकरोति—निरूपस्येति। निरूपस्य, रूपरहितस्य विभोः परमेश्वरस्य प्रतिविम्बायोगाः। परिच्छिन्नस्य रूपविशिष्टस्यैव प्रतिविम्बभावात् । अन्यथा, रूपरहितस्य परमेश्वरस्य प्रतिविम्बकल्पने वायुदिगादेः, आकाररहितदिगादिषु तदापत्तिः, रूपस्य प्रसङ्गः। वेदान्तसूत्रं चैवं सूत्रयति "अम्बुवदग्रहणात्" जीवः ब्रह्मणः प्रतिबिम्बरूपः भवितुं नार्हति। पुनः तत्परिहारार्थं पूर्वपक्षमुपस्थापयति— आकाशेति। आकाशस्य नीलरूपस्य जले प्रतिविम्बवत् रूपरहितस्य परमात्मनः प्रतिबिम्बपातः इतिः चेत्—समादधाति। आकाशान्तर्गतस्य

तिरशंस्य तु तत्तया प्रत्ययो भ्रम: एवेति तत्त्वविदः । श्रुतिस्त्वनुवादिनीत्याहुः । २१

यत्तु वदन्ति अद्वितीये शुद्धचैतन्ये तदज्ञानाज्जीवेश्वरभावाध्यासः । नभःस्वरूपापरिज्ञानात् तत्र यथा नीलिमाध्यस्यते तज्ज्ञानेन तस्मिन्नध्यस्तस्य तस्य विनिवृत्तौ तु शुद्धं तदवशिष्यते इति । २२

तदिदं रभसाभिधानमेव । अविषये तस्मिन्नध्यासायोगात् । नभेस ज्ञानविषयत्वात् तत्र नीलिमाध्याससम्भवः । न च शुद्धचैतन्यं ज्ञानविषयो भवताम् । तस्मात्

---

ज्योतिरशस्य प्रत्यय: एव नीलरूपत्वेनावभासते । ग्रहनक्षत्रादीनां प्रतिबिम्बमेव आकाशस्य तादृशनीलप्रत्ययं प्रति कारणम् । वास्तवतः विभोः परमात्मनः प्रतिबिम्ब न सम्भवति । २१

अद्वैतमतसमर्थित अध्यासपक्षं खण्डयितुं पूर्वपक्षमारभते ।–यद्वदति । केषांचित् मतानुसारं यथैव नभःस्वरूपापरिज्ञानात् नभः निलरूपमित्यध्यासस्तस्य रूपरहितं, निर्मलमिति ज्ञानानन्तरं अध्यस्तस्य नीलरूपस्य तत्र विनिवर्त्तनं भवति, तथा ब्रह्म शुद्धचिन्मात्रमिति अवबोधानन्तरं तत्र जीवे श्वरादिप्रत्ययः अध्यस्त सन् प्रतीयते । तूपस्य अध्यासस्य विनिवृत्तौ शुद्ध तुरीय चैतन्यमवशिष्यते इति । २२

तदिदं उपर्युक्ताभिधानं रभसाभिधानमेव, उपहसनीयमेव । अविषये, अविषयभूते तस्मिन् परब्रह्मणि अध्यासायोगात् । निष्कर्षस्तु अयं यत् आकाशं किल ज्ञानस्य विषयभूतम् । तत्र नीलरूपस्य अध्यासः सम्भवः परन्तु परमात्मा न कस्यापि ज्ञानस्य विषय: । तथा सति तत्र ब्रह्मणि ज्ञेयताप ।

यत्किञ्चिदेतत् । किं च कीदृशं ज्ञानं निवर्त्तकमिष्यते । शुद्धचैतन्यं वृत्तिरूपं वा नाद्यः । तस्य नित्यत्वेन नित्यमध्यस्तनिवृत्तिप्रसङ्गात् । नापि वृत्तिरूपं । तस्य सत्यत्वे द्वैतापत्तेः । मिथ्यात्वे कथमध्यस्तनिवर्त्तकता ? सत्यस्य हि शुक्त्यादिज्ञानस्य रजताद्यध्यस्तस्य निवर्त्तकता दृष्टा । २३

यत्तु फलवत्यज्ञातेऽर्थे शास्त्रतात्पर्यवीक्षणात ताद्दगभेदस्तत्तात्पर्यगोचरः । वैफल्याज्ज्ञातत्वाच्च भेदस्तद्गोचरो

---

ज्ञेयत्वस्वीकारे ज्ञातुः स्वीकारः अवश्यम्भावीति अद्वैतहानिरूपानर्थापत्तिः । अर्थात् अध्यासः न सिद्ध्यति कदाचित् । पुनः परिहरति – किञ्चेति । तन्निवर्त्तकं नाम अज्ञाननिवर्त्तकस्वभावकं ज्ञानं कीदृशं, किंरूपमिति ।

शुद्ध चैतन्यात्मकं ज्ञानं, वृत्तिरूपं अन्तःकरणवृत्तिरूपं वा ? नाद्यः । न प्रथमम्, शुद्धचैतन्यस्वरूपं ज्ञानम् । तस्य शुद्धचैतन्यरूपस्य ज्ञानस्य नित्यत्वेन, शाश्वतत्वात् त्रिकालबाधराहित्यं सत्त्वमिति लक्षणस्य तत्र सङ्गतेः नित्यमध्यासनिवृत्तेः । अध्यस्तज्ञानस्य नित्यनिवृत्तित्वेन सृष्टिक्रयायाः असम्भावना । नापि वृत्तिरूपमिति द्वितीय ज्ञानम् । तस्य अन्तःकरणवृत्तिरूपस्य ज्ञानस्य सत्यत्वे, नित्यत्वपरिकल्पने द्वैतापत्तेः । एकं शुद्धं चैतन्यम्, अन्यत् अज्ञाननिवर्त्तकं अन्तःकरणवृत्तिरूपज्ञानमिति द्विधापरिकल्पनात्, ननु तादृशान्तःकरणरूपस्य ज्ञानस्य मिथ्यात्वमिति चेत् – तन्न शक्यं वक्तुम् मिथ्याभूतेन ज्ञानेन अज्ञाननिवृत्तिरूपसत्यब्रह्मावगतेरसम्भवात् । सत्यस्य शुक्त्यादिज्ञानस्य, अर्थात् यथार्थशुक्त्यादिज्ञानमाध्यमेन मिथ्याभूतस्य रजतादिज्ञानस्य निवृत्तिः । परन्तु न कुत्रापि मिथ्याभूतेन ज्ञानेन सत्योपलब्धिः श्रूयते । तथा सति सार्वजनीनोपलब्धेर्हानिप्रसङ्गः । २३

जीव-ब्रह्मणोः अभेदोपपत्तेरेव शास्त्रतात्पर्यमिति पूर्वपक्षमुपस्थापयति यत्त्वति फलवति अज्ञाते अर्थे शास्त्रतात्पर्यवीक्षणात्, दर्शनात् वेदान्त-

न स्यात् किन्त्वनुद्यमान एव सः । अदृश्यो वा एषः प्रातरुदेति आपः सायं प्रविशतीति वदति । २४

तन्मन्दम् ।

"पृथगात्मानं प्रेरितारं च मत्वा
जुष्टस्ततस्तेनामृतत्वमेति
जुष्टं सदा पश्यन्त्यन्यमीश-
मस्य महिमानमेति वीतशोकः"

इत्यादौ तत्र फलश्रवणात विरुद्धधर्मावच्छिन्नप्रतियोगीकतया लोके तस्याज्ञातत्वाच्च । ते च धर्मा विभुत्वाणु-

---

वाक्यानां तत्र अभेदे एव तात्पर्यम् । भेदस्य जीव-ब्रह्मणोः स्वरूपभेदस्य वैफल्यात् अतात्त्विकात् सर्वैः अनुभूतत्वाच्च न भेदे शास्त्रतात्पर्यम । केवल अनुवादमात्रम् । भेदप्रतिपादकानां वाक्यानां निरर्थकत्वमिति सूचयति—यथा अदृश्यो, जलेभ्यः एव सूर्य प्रातरुदेति सायं प्रविशति, सन्ध्याकाले अस्तं याति ।

अत्र यथैव सूर्यस्य जलप्रकाशात् उदयः अस्तो वा न सम्भवति, केवलं प्रतीयते एव, तद्वद् भेदरूपेण अखिलं वस्तुजातं प्रतीयते । परन्तु न वास्तवतया भेदः वर्त्तते इत्यर्थ एतन्मतं निराकुर्वन्नाह तन्मन्दमिति । २४

जीव-परमात्मनोः भेददर्शनार्थं, श्रुतिप्रमाणं दर्शयति—पृथगात्मानमिति । आत्मानं परमेश्वरं पृथक, स्वस्मात् भिन्नम्, प्रेरितारं, विधायकं च मत्वा यः सेवते स अमृतत्वमेति नाम मोक्षपदमधिगच्छति । केनोपनिषदि च "केनेषितं पतति प्रेषितं मनः, केन प्राणः प्रथमः प्रैतिः युक्तः, केनेषिता वाचमिमां वदन्ति । चक्षुः श्रोत्रं क उ देवो युनक्ति" इति वाक्येन जीवेश्वरयोः स्पष्टः भेदः स्वीकर्त्तव्यः । ते च धर्मा विभुत्वाणुत्वादयः धर्माः शास्त्रैकगम्याः, अर्थात् केवलं शास्त्रप्रमाणेन ज्ञायन्ते, अभेदज्ञानस्य फलं

त्वादयः शास्त्रैकगम्याः भवन्ति । अभेदस्त्वफलस्तत्र फलानङ्गीकारात् अज्ञातञ्च नरशृङ्गवत् असत्त्वादेव । अभेदबोधिकाः श्रुतयस्तु तदायत्तवृत्तिकत्वतद्व्याप्यत्वाभ्यां सङ्गमिता एव । २५

किञ्चाभेदो ब्रह्मेतरो ब्रह्मात्मको वा । नाद्यः । अभेदहानात् । तदितरस्य मिथ्यात्वेन श्रुतीनामतत्त्वावेदकत्वापत्तेः सत्यता च । भेदस्य मिथो विरुद्धयोरन्यतरनिषेधस्यान्यतरविधिव्याप्तत्वाच्च । न चान्त्यः । ब्रह्मणः स्वप्रकाशतया नित्यसिद्धश्रुतीनां सिद्धसाधनतापत्तेश्च । २६

अपि च नाभेदस्योपदेशः सिद्ध्यति । उपदेष्टुरनिर्णयात् तथा तदुपदेष्टा तत्त्वज्ञो न वा ? आद्यो अद्वितीयमात्मानं

---

निराकरोति— अभेदस्त्वफलमिति । अद्वैतवादिनां मतानुसारं ब्रह्मव्यतिरिक्तं किमपि नास्ति इति कृत्वा अभेदज्ञानस्य फलं तावत् नरशृङ्गवत् असत्, सुतरामसम्भवमिति । अथ का गतिः अभेद बोधिकानाम् श्रुतीनामिति चेत्— प्राणसम्वादवत् तदायत्तवृत्तिकत्वेन तद्व्याप्यत्वेन च तासां सङ्गतिः । २५

पुनः जीव-ब्रह्मणोः भेदः युक्तिमुखेन प्रतिपादयति-किञ्चेति । अद्वैतीभिः परिकल्पितः अभेदः ब्रह्मेतरः ब्रह्मात्मकः, (शुद्धचिन्मात्रस्वरूपः) वा । न प्रथमः अभेदहानात् । ब्रह्मेतरपदार्थाङ्गीकारे अभेदतत्त्वस्य हानिः स्यात् । पदार्थद्वयानङ्गीकारात् । श्रुतीनामपि अतात्पर्यप्रसक्तिः । अभेदपरत्वात् तासाम् । न चान्त्य, न द्वितीयं मतं ग्रहणीयम् । ब्रह्मणः स्वप्रकाशत्वात् ब्रह्मात्मकाभेदविषयः श्रुतिप्रतिपादनेन निष्पन्नश्चेत्तर्हि सिद्धसाधनतादोषाभ्युपगमः । २६

श्रुतीनामभेदोपदेशं खण्डयति— अपि चेति । तदुपदेष्टा,

विजानतः तस्य नोपदेश्यभेददृष्टिरिति । न तं प्रति उपदेशः सम्भवेत् अन्योऽप्यज्ञत्वात् नात्मज्ञानोपदेष्टृत्वम् । २७

तथाधिगताभेदस्य तस्य बाधितानुवृत्तिरूपमिदं भेददर्शनं मरीचिकावारिबुद्धिवदतो नोपदेशानुपपत्तिरिति चेन्मन्दम् । दृष्टान्तविरोधात् । तद्बुद्धिर्हि बाधितानुवर्त्तमानापि न वार्य्याहरणे प्रवर्त्तयेदेवमभेदज्ञानबाधिता भेददृष्टिरनुवर्त्तमानापि मिथ्यार्थविषयत्वनिश्चयान्नोपदेशे प्रवर्त्तयेदिति विषयनिदर्शनम् । २८

---

जीवब्रह्मणोरभेदोपदेष्टा तत्त्वज्ञः, अर्थात् ब्रह्मवित् न वा । आद्यो यदि ब्रह्मवित् तत्त्वज्ञः स्यात्, तदा आत्मान परमेश्वरं विजानतः तस्य नोपदेश्यभेददृष्टिः । कुतः उपदिष्टोपदेष्टृभावः । तेन सर्वत्र चैतन्यमात्रस्य अनुभवात् ।

न 'शास्ता शास्त्रं वा न शिष्यः न शिक्षा
तदेकोऽवशिष्टः शिवः केवलोऽहम् ।

इत्यादि सिद्धान्ताभ्युपगमात् । २७

पुनः खण्डयितुं अद्वैतवादिनां युक्तिमुपस्थापयति—तथाधिगताभेदस्येति । तथा विधभेदज्ञानस्य बाधितत्वेऽपि उपदेशकाले तस्य अनुवृत्तिः । तत्र दृष्टान्तं दर्शयति मरीचिकावदिति । यथा मरीचिका मिथ्यारूपमिति कस्यचित् ज्ञानसत्त्वेऽपि तस्य मरुभूम्यादिषु गमनसमये पुनः मरीचिकादर्शनं भवत्येव, तद्वत् भेदज्ञानविनाशानन्तरमपि उपदेशकाले तत्प्रसङ्गः इति चेत्—न । दृष्टान्तविरोधं दर्शयति – तद्बुद्धिः, मरिचीकाबुद्धिः यद्यपि अनुवृत्तितया दृश्यते, तथापि वार्य्याहरणे, जलानयने न प्रवर्त्तयेत् । अर्थात् प्रवृत्तिः न जायते । परन्तु अभेदज्ञानानन्तरं यदि भेदज्ञानं भवति पुनः मिथ्याभूतं विषयदर्शनं सम्भवति । २८

यत्तु शुद्धे चैतन्ये अज्ञानेन कल्पितमिदं विश्वं तज्ज्ञानेन बाध्यते, रज्जुभुजङ्गवत्, तेनाद्वैतं सिद्धमेवेति वदन्ति, तदपि निरवधानमेव, क्षोदाक्षमत्वात् ।

तथाहि क्वेदमज्ञानम् ? ब्रह्मणि जीवे वा । न प्रथमः । स्वप्रकाशचैतन्ये तस्मिंस्तद्योगासम्भवात् च । न द्वितीयः । कल्पनात् पूर्वं जीवभावासिद्धेः । २८

तथाज्ञानं सत्यं न वा ? नाद्यः । अनिवृत्तिप्रसङ्गात । नापि अन्त्यः । प्रतीतिर्विरहात् । न च सदसद्विलक्षणत्वा-दिष्टसिद्धिः । तादृशे प्रमाणाभावात् । घटपटादीनां सत्त्वं

---

यत्तु अद्वैतवादिनः आमनन्ति, असर्पभूतायां रज्जौ सर्पारोपवत् वस्तुनि शुद्धे चैतन्ये अवस्तुभूतस्य, अज्ञानपरिकल्पितस्य जगतः आरोप-त्वात् सिद्धमिति । तदपि निरवधानं नाम प्रमादग्रस्थमेव । क्वेदमज्ञानम् ? कुत्र अवस्थापितं अज्ञानम् ? ब्रह्मणि जीवे वा । न प्रथमः । ब्रह्मणि अज्ञानावस्थानं कल्पयितुं न शक्यते । स्वप्रकाशरूपे चैतन्ये अज्ञाना-योगात् । तथा सति तुरीयत्वं नाम शुद्धत्वहानिः । यदि शुद्धे चैतन्ये अज्ञान-संयोगः सः कीदृशः संयोगः ? ब्रह्मणः एकदेशे संयोगः उत कृत्स्नतया । यदि एकदेशे तर्हि निरूपे निरवयवे ब्रह्मणि अवयवत्वापत्तिः । यदि कृत्स्ने ब्रह्मणि अविद्यासंयोगः, तस्यापि स्वप्रकाशभूतस्य ब्रह्मणः बद्धत्वप्रसङ्गः । न द्वितीयः, जीवे अज्ञानस्याधिष्ठानं नैव सम्भवति । अज्ञानकल्पनात् प्राक् जीवभावस्यासिद्धत्वात् । अद्वैतीभिः ब्रह्मणः अज्ञानावच्छेदांशस्यैव जीवत्वेन निर्द्देशात् । २८

अज्ञानं निरस्यति— अथेति । अज्ञानं सत्यं न वेति । नाद्यः । न सत्यमिति । सत्यस्य निवृत्तिरसंभवात् त्रिकालबाधराहित्यं सत्व-मिति सत्यस्य लक्षणाभ्युपगमात् । नाप्यन्त्यः । न द्वितीयः । प्रतीतिविरहात् ।

खपुष्पादीनामसत्त्वं घटादीनामेव देशकालव्यवस्थाया सद सत्त्वमिति प्रकारत्रयस्यैवानुभवान्नातोऽन्यत् सदसत्विलक्षण मनोर्वचनोयमज्ञानं स्वीकर्त्तुं शक्यं यत्किञ्चिदेतत् । ३०

तस्मात् पराख्यशक्तिमता भगवता निमित्तेन प्रधानादि-शक्तिमता च तेनोपादानेन सिद्धमिदं जगत् पारमार्थिकमेव । "सोऽकामयत बहुस्यां प्रजायेय" "स तपोऽतप्यत" स तप-स्तप्त्वा इदं सर्वमसृजत । यदिदं किञ्चित्- "कविर्मनीषी परिभूः स्वयंभूः याथातथ्यतोऽर्थान्व्यदधात् शाश्वतीभ्यः समाभ्यः" "तदात्मान स्वयमकुरुत" इत्यादि श्रवणात् ।

---

यदि अज्ञान न सत्यं तर्हि तस्य प्रतीतिरपि न स्यात् । आकाशकुसुमवत् क्वचिदपि सत्येन अप्रतीयमानत्वं असत्त्वमिति, असत्यस्य लक्षणव्यदेशात । अज्ञानस्य लक्षणं निरस्यति— न चेति । सदसत विलक्षणमनिर्वचनियमिति अज्ञानस्य लक्षणं अद्वैतवादिभिः कृतम् । ननु किं च तत्— सदसद्विल-क्षणमनिर्वचनीयमिति चेत् । यत् खलु सत् इति न निर्वचनीयम, असदित्यपि न निर्वचनीयम् इति । जगद्विषये च सद् इति वक्तुं न शक्यते । ब्रह्मज्ञानानन्तरं तस्य बाधितत्वात् । तच्च असदिति न निर्वचनीयम् । आकाशकुसुमवत् तस्याभावाप्रतीतेः । अतः सदसद्विलक्षणमनिर्वचनीय-मिति चेत्— न एतादृशवस्तुनः प्रमाणाभावात् । परस्परविरोधवस्तुनः एकत्र स्थित्यसम्भवात्, तन्निमित्तं नास्ति प्रत्यक्षादिकं किमपि प्रमाणम् । ३०

जगतः पारमार्थिकत्वं दर्शयति तस्मादिति । तस्मात्, — सदसद्-विलक्षणत्वास्वीकरात् पराख्यशक्तिमता भगवता निमित्तेन, भगवतः चित् शक्तिरूपेण निमितकारणत्वम् । प्रधानादिशक्तिमता च, प्रकृत्यादिरूपेण

तदेतदक्षयं नित्यं जगन्मुनिवराखिलम्
आविर्भावतिरोभावजन्मनाशविकल्पवत्

इति वैष्णवात् ।

ब्रह्म सत्यं तपः सत्यं सत्यं चैव प्रजापतिः
सत्याज् जातानि भूतानि सत्यं भूतमयं जगत् ।

इति महाभारतात् च । एकमेवाद्वितीयं ब्रह्मेत्यत्रापि वनलीनविहङ्गादिन्यायेन तदपि जगत् सत्यं सिद्धम् । भ्रमवादस्तु सर्वथानुपपन्नः । "सोऽकामयत इत्यादि श्रुतिव्याकोपात् । ३१

---

उपादानकारणत्वम् । अत जगतः पारमार्थिकत्वमेव सिद्धम् । श्रुतिप्रमाणं दर्शयति — "सोकामयत" इति । ईश्वरस्य संकल्पमात्रेण सृष्टमिदं जगत् । यदिदं किञ्चित् इत्यत्र परमेश्वरः आत्मानं स्वयमकुरुत इत्यनेन जगतः नित्य । त्वोपपत्ति जगतः पारमार्थिकत्वं स्मृतिप्रमाणेन दर्शयति । तत्र विष्णुपुराणे- इदमखिलं जगत् नित्यं शाश्वतमक्षयं च । तत्र यः विनाशः या उत्पत्तिर्वा दृश्यते तत् केवल आविर्भावतिरोभावमात्रं बोध्यम् । परब्रह्म परमात्मा सत्यम्, प्रजापतिः सत्यम्, तत् सकाशात् जातानि सृष्टानि, भूतानि सत्यानीति प्रमाणान्तरमपि विद्यते । "कारणगुणात् कार्यगुणः आरभते" यत्र कारणं नित्यं तत्र कार्यमपि नित्यम् । वनलीनविहङ्गवत् जगदिदं ब्रह्मणि लीनतया अवतिष्ठते । तत् सकाशादपि आविर्भवति । अतो तस्य नित्यत्वं सिद्धम् । भ्रमवादस्तु, अद्वैतवादिकल्पितः रज्जौ सर्पभ्रमवत् वस्तुनि ब्रह्मणि अवस्तुभूतस्य जगतः भ्रमः सर्वथानुपपन्नः, इतिसिद्धान्तः असिद्धः इति भावः । ३१

किंच क्व कस्यायं भ्रमः ? शुद्ध चैतन्ये जीवस्य इति चेन्न । तस्याप्रत्यक्षत्वात् अध्यारोपे ह्यधिष्ठानं साक्षात्करस्तन्त्रम । न च शुद्धचैतन्यं स्वस्मिन् जगद्रूपेण पश्यति, तस्य नित्य-सिद्धस्वरूपज्ञानत्वात् । किं च सादृश्यावलम्बी भ्रमोऽनुमीयते स्थाणुः पुमानित्यादौ । तथा च भ्रमविषयाज्जगतोऽन्यत् पारमार्थिकं सिद्धम् । अस्ति हि शुक्तिरजतादन्यत् पारमार्थिकं हट्टस्थं तदित्यनुपपन्नस्तद्वादः । तस्मात ईश्वरादन्य-स्तद्वन्नित्यचेतनस्तद्दासो जीवो भवतीति सिद्धम् ।३२

इति श्रीमद्वेदान्ताचार्यवर्यबलदेवविद्याभूषणविरचिते वेदान्तस्यमन्तके जीवनिरूपणः "तृतीयः किरणः" ।

---

पुनः खण्डनार्थं प्रश्नः क्रियते सिद्धान्तिभिः । कुत्र भ्रमः ? शुद्धे ब्रह्मणि जीवस्य इति चेन्न । ब्रह्मणः प्रत्यक्षज्ञानस्याविषयत्वात्, रज्जौ सर्पारोपकाले रज्जुः प्रत्यक्षस्य विषयः भवति । परन्तु रज्जुप्रत्यक्षं यदि न स्यात्, तर्हि भ्रमस्य प्रत्यक्षं कुतः ? नित्यशुद्धस्य विषयत्वास्वीकारात् अज्ञानासम्भवः । भ्रमोऽपि न स्वीकर्त्तव्यः । तथासति ब्रह्मव्यतिरिक्तस्य जगतः सत्यत्वात् अद्वैततत्त्वस्य हानिः, अद्वैतवादोऽप्रतिष्ठितश्च । तस्मात् ब्रह्मणि जगद्भ्रमाभावात् जगतः सत्यत्वं पारमार्थिकत्वं च अङ्गीकार्यम् । एवमेव ईश्वरादन्यः अणुचैतन्यसञ्ज्ञकः जीवः नित्यः तद्दासः सिद्धः इति दिक् । ३२

इति श्रीवेदान्तस्यमन्तके जीवनिरूपणे तृतीयकिरणे तत्त्वप्रदीपनीटीका समाप्ता ।

—०—

# चतुर्थः किरणः

अथ प्रकृतितत्त्वं निर्णीयते । सत्त्वादिगुणत्रयाश्रयद्रव्यं प्रकृतिर्नित्या च सा ।

गौरनाद्यन्तवती सा जनित्री भूतभाविनी
सितासिता च रक्ता च सर्वकामदुघा विभोः (मंत्रिकोपनिषद् -5)

इत्यादि श्रुतेः । त्रिगुणं तद् जगद्योनिरनादि प्रभवाप्ययम्

---

अथ जीवतत्त्व-निरूपणानन्तरं प्रकृतितत्त्वं, परमात्मनः वहिरङ्गा-शक्त्याख्यं मायातत्त्वं निर्णीयते विविच्यते । गुणत्रयाश्रय, सत्त्वरजस्तमसां त्रयाणां गुणानामाश्रयतत्त्वं यत् द्रव्यं, तच्च प्रकृतितत्त्वम् । उपनिषदि च—

अजामेकां लोहितशुक्लकृष्णां

वह्वीः प्रजा-सृजमानाः स्वरूपाः इति उक्तमस्ति । गौः, प्रकृतिः, अत्रायं निर्णयः यत् मायाय, प्रकृतेः परस्य ब्रह्मणः शक्ति- रूपेण अनादि त्वम्, परन्तु कार्यावस्थायाः अन्तवतीत्वम् । यतः शक्तिपरिणामरूपा जगदिदं प्रकृतेः परिमाणस्वरूपम कार्यत्वात् । प्रलये कार्यरूपा प्रकृतिः परंब्रह्मणि लीयते । सा प्रकृतिः जनित्री, सर्वेषां भूतानां जनयित्री, भूत-भाविनी, भूत समुदायस्य भावयित्री, प्रकाशिनी इति । सा जडापि शक्ति शक्तिमतोरभेदोपचारतः वहिरङ्गा शक्तिरूपेण जगतः जनयित्री । सा सिता, शुक्ला, असिता, कृष्णा, रक्ता लोहिता गुणत्रयाणां आश्रभूता इत्यर्थः । विभोः, परमात्मनः सर्वकामदुघा, सर्वकार्यसाधिका, भगवतः शक्तिपरि-णाममयी जगतः साधिकाइति भावः । पुनः स्मृतिमुखेन प्रमाणयति-गुणत्रयाणां साम्यावस्था, जगद्योनि, जगतः उपादानकारणम् । अनादि, नित्या प्रभवाप्ययम्, जगतः उत्पत्तिलयस्थानम् अचेतना, जडा, भगवतः अपरा शक्तित्वात् परार्था-, जगत् सृष्टिनिमित्तमेव प्रवृत्ता इति भावः । नित्या,

अचेतना परार्था च नित्या सतत विक्रिया
त्रिगुणं कर्मिणां क्षेत्रं प्रकृतेः रूपमुच्यते ।

इति स्मरणाच्च । १

तत्र प्रकाशादिर्गुणः सत्त्वं, रागदुःखादि हेतू रजः, प्रमादालस्यादिहेतुस्तु तमः । एषां साम्ये प्रलयः,, एकदेहस्थकफवातपीत्तसाम्ये मृत्युरिव । अङ्गांगिभावेन वैषम्ये तु महदादिसर्गः स्यात् । प्रलये स्वरूपः साम्यरूपः परिणामः, सर्गे तु विरूपः सः इति सततविक्रियेति उक्तम् । प्रकृतेरस्याः

---

सा प्रकृतिः प्रवाहरूपेण नित्या, सतत विक्रिया, स्वभावतः क्रियाशीला, विकृतिरूपा, प्रकृतेः विकृतिः महदादेः आरभ्य पृथिव्यन्तं भूतपर्यन्तं इति भावः । कर्मिणां, कर्मणिनां जीवानां क्षेत्रं, शरीराद्युपादानं इति । १

पृथकतया सत्त्वादिगुणान लक्षयति । प्रथमं सत्त्वस्य लक्षणं निरूपयति - तत्रेति । प्रकाशादिगुणः, ज्ञानवत्वादिगुणः सत्त्वम "सत्त्वं लघु प्रकाशकम्" इति ईश्वरकृष्णेन कारिकायामुक्तत्वात् । गीतोपनिषतषु—

तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम्
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥

प्रकाशकत्वात् सत्त्वगुणः अहंसुखी, अहं ज्ञानी, इत्यादिभावं जीवे जनयति । अनामयं, निरुपद्रवमिति भावः अयं गुणः जीव सुखसङ्गेन ज्ञानसङ्गेन च बध्नाति ।

रजोगुणं लक्षयति- रागदुःखादिहेतुरिति । रागदुःखादीनां हेतुः, कारणं यः गुणः, स च रजीगुणः इति "चलं च रजः" इति रजोगुणस्य लक्षणवशात्, तच्चरागादीनां हेतुः रजोगुणस्य क्रियात्मकत्वात्, तच्च सुखादिना बध्नाति ।

प्रथमपरिणामादिनात्मन्यनध्यवसायहेतुः । स च त्रिविधः ।
"सात्त्विको राजसश्चैव तामसश्च त्रिधा महानिति
वैष्णवात् । २

तस्मिन् विकारविशेषोऽहंकारः, आत्मनि देहाहंभाव-
हेतुरिति । स च सात्त्विको राजसस्तामसश्चेति त्रिविधः ।

---

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्,
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनाम् ।

रजोगुणं, रागात्कमनुरञ्जनरूपं विद्धि, तृष्णायाम्, अर्थात् अप्राप्ते अर्थे अभिलाषः, सङ्गे, प्राप्ते अर्थे आसक्तिः ताभ्यां बध्नाति ।

तमोगुणं लक्षयति— प्रमादालस्यादीति । प्रमादालस्यादीनां हेतुः कारणं तमोगुणः —

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्,
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥

इति स्मृतेश्च । एषां सत्त्वरजस्तमोगुणानां साम्ये—समानावस्थायाम् प्रलयः, सृष्टि-विनाशः इति भावः । यथैव एकस्मिन् शरीरे वातपीत्तश्लेष्माणां साम्ये मृत्युः । तद्वत् त्रयाणां गुणानां समानरूपेणावस्थानेन सृष्टेः लयः भवति । वैषम्ये तु महदादिसर्ग । अर्थात महत्तत्त्वादारभ्य पृथिव्यन्तं भूतपर्यन्तं सृष्टिरिति । प्रकृतेः परिणामं दर्शयति- प्रलये इति, प्रकृतेः साम्यरूपः परिणाम प्रलयः इत्येवावधार्यते । वैषम्यरूपपरिणामः सृष्टिरित्यभिधीयते । अतो सततं परिणामशीला प्रकृतिरिति उच्यते । प्रकृतेः परिणामं क्रमेण दर्शयति — प्रकृतेः प्रथमं परिणामरूपं महत्तत्त्वम् । तस्य त्रिविधत्वं-स्मृतिप्रसिद्धम् । सात्त्विक—राजसिक-तामसिक-भेदात् । २

तस्मिन् महत्तत्त्वे विकारविशेषः, परिणामविशेषः अहंकारः, अहंकाराख्यं तत्त्वम् । अखिलशरीराद्यभिमानहेतुश्चायं अहंकारः । स च अहंकारः त्रिविधः । सात्त्विकः राजसिकः तामसिकश्च । तत्र सात्त्विका-

क्रमाद्वैकारिक-तैजस-भूतादिशब्दैश्चाभिधीयते । मध्यमस्तु द्वयोः प्रवर्त्तकतया सहकारीत्याहुः । सात्त्विकादहंकाराद्-इन्द्रियाधिष्ठात्र्यो देवता मनश्च । राजसाद्बाह्येन्द्रियाणि दश । तामसात्तु तन्मात्रद्वाराकाशादीनि पञ्चेति । एवमेवोक्त-मेकादशे—

ततो विकुर्वतो जातो योऽहंकारो विमोहनः ।
वैकारिकतैजसश्च तामसश्चेत्यहं त्रिवृत् ।
तन्मात्रेन्द्रियमनसां कारणं चिदचिन्मयः ।
अर्थस्तन्मात्रिकाज्जज्ञे तामसादिन्द्रियाणि च ।
तैजसाद्देवता आसन्नेकादश च वैकृतादिति ।

तामसादर्थः पञ्चभूतलक्षणः— तैजसादिन्द्रियाणि दश । वैकृतादेकादशदेवता आसन् मनश्चेत्यर्थः । तृतीये च—

महत्तत्त्वाद्विकुर्वाणाद् भगवद्वीर्यचोदितात्,
क्रियाशक्तिरहंकारः त्रिविधः समपद्यत ।

---

दहंकारात् मनः, इन्द्रियाणां अधिष्टात्र्यो देवताश्च । राजसात् अहंकारात् द्विविधमिन्द्रियम् । ज्ञानेन्द्रियपञ्चकम्, कर्मेन्द्रियपञ्चकं च । तामसाच्च अहंकारात् पञ्चतन्मात्राणि । तेभ्यः च पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानि जायन्ते उक्तं च श्रीमद्भागवते— ततो, तस्मात् महत्तत्वात् विकुर्वतोः, नाम विक्रियारूपतः अहंकारः जातः । स चाहंकारः जीवविमोहनरूपः । अभि-मानाख्यं चित्तसंस्कारं जनयतीति भावः, अहंकारः वैकारिकः, सात्त्विकः तैजसः; राजसः, तामसश्च त्रिविधः । तन्मात्रेन्द्रियमनसां कारणं, क्रमेणैव वैकारिकात् अहंकारात् मनसः, राजसात् अहङ्कारात् चक्षुरादीनामिन्द्रि-याणां तामसात् च अहङ्कारात् तन्मात्राणां पृथिव्यादीनां भूतानां सृष्टिरिति ।

वैकारिकस्तैजसश्च तामसश्च यतो भवः

मनसश्चेन्द्रियाणां च भूतानां महतामपि ।

मनसश्चेति चाद्देवतानाञ्चेति बोध्यं क्रमादिति च । ३

अयमत्र निष्कर्षः—द्विविधं खलु इन्द्रियम् । अन्तरिन्द्रियं बहिरिन्द्रियं च । तत्र अन्तरिन्द्रियं मनः सात्त्विकाहङ्कारोपादानकं द्रव्यं संकल्पविकल्पहेतु हृतप्रदेशवृत्तिः, तदेव क्वचित् अध्यवसायाभिमानचिन्तारूपकार्यभेदात् बुध्यहङ्कारचित्तसंज्ञां धत्ते । इदं मनो विषयसंसर्गेण बन्धहेतुः ।

"मनः एव मनुष्याणां कारणं बद्धमोक्षयोः

अशुद्धं कामसंकल्पं शुद्धं काम इति श्रुतेः विवर्द्धितम् ।"

---

अहङ्कारः त्रिवृत्,- वृत्तित्रयवान् तन्मात्रेन्द्रियमनसां व्युत्क्रमेण यथासंख्यं चिचदचिन्मयः इति । स्वयं अचिन्मयोऽपि जीवोपाधित्वेन तदैक्याच्चिज्जडग्रन्थिरूपत्वात् चिदचिन्मयः । ३

सारस्तु एवं खलु द्विविधं इन्द्रियम्, बहिरिन्द्रियं अन्तरिन्द्रियं च । तत्र अन्तरिन्द्रिय मनः । मनसः लक्षणं विदधातिसात्विकमिति । सात्विकाहङ्कारोपादानकं सात्त्विकाहङ्कारः उपादानकारणं यस्य तत् सात्त्विकाहङ्कारोपादानकं,संकल्प विकल्पहेतुः, विभिन्नसंकल्पविकल्पानां कारणमिति भावः । मनसः अवस्थान्तर बुध्यादिकमिति दर्शयति—तदेव मन क्वचित् कस्मिन् समये अध्यवसायात्मकत्वात् बुद्धिरूपेण, कदाचित् च अभिमानात्मकत्वात् अहङ्काररूपेण, कुत्रापि चिन्तारूपेण चित्तसंज्ञां धत्ते, धारयति । इदं मनः विषयसंसर्गेण, शब्दस्पर्शादिजागतिकवस्तु संसर्गेण बन्धनस्य कारणं भवति । उक्तं च शास्त्रान्तरे—

"मनः एव मनुष्याणां कारणं बन्धमोक्षयोः",बन्धनस्य मोक्षस्य च कारणम्

तदित्थं स्मृत्यादिकरणमिन्द्रियं मनः सिद्धम् । ४

राजसाहङ्कारोपादानकं द्रव्यं वहिरिन्द्रियम् । तच्च द्विविधम् । ज्ञानेन्द्रियकर्मेन्द्रियभेदात् । तत्र आद्य पञ्चविधं, श्रोत्रत्वक्चक्षूरसनघ्राणभेदात् । तत्र शब्दमात्रग्राहकमिन्द्रियं श्रोत्रम् । मनुष्यादीनां कर्णशष्कुल्यावच्छिन्नप्रदेशवृत्ति, सर्पाणां तु चक्षु-वृत्तिः । स्पर्शमात्रग्राहकमिन्द्रियं त्वक् सर्व-शरीरवृत्तिः । नख-केशादौ प्राणमात्रतारम्यात् स्पर्शानुपलब्धिः । रूपमात्रग्राहकमिन्द्रियं चक्षुः कृष्णताराग्रवृत्तिः ।

---

तत् मनः कामवर्जितं सत् संसारमोक्षाय कारणमपि भवति । स्मृत्यादेः संस्कारस्य कारणं, कार्यमात्रं प्रति असाधारणकारणत्वेन तन्मनः इन्द्रियमेवेति सिद्धम् ॥ ४

वहिरिन्द्रियं लक्षयति—राजसेति. राजसाहङ्कारोपादानकं, राजसः अहङ्कारः उपादानं येषां तानि; चक्षुरादीनि वहिरिन्द्रियाणि । इन्द्रियाणि विभज्यन्ते— तच्चेति । ज्ञानेन्द्रियकर्मेन्द्रियभेदेन द्विविधम् ।

तत्राद्यं श्रोत्र- त्वक् - चक्षुः - रसन-घ्राणभेदात् पञ्च, पृथक् तया लक्षयति शब्दमात्रग्राहकमिन्द्रियं, श्रोत्रं । मात्र पदेन अन्येषां स्पर्शादिनां कर्मेन्द्रियाणां च ग्रहणं न सम्भवति, इति भावः । तच्चश्रोत्रेन्द्रियं कर्णशष्कुल्यावच्छिन्नं आकाशरूपम्, परन्तु सर्पाणां चक्षुप्रदेशवृत्तित्वं श्रोत्रस्य । त्वगिन्द्रियं लक्षयति–स्पर्शमात्रग्राहकमिति । अर्थात् स्पर्शमात्रग्राहकं यत् इन्द्रियं तच्चत्वगिति अभिहितम्, तस्य च सर्वशरीरवृत्तित्वम् । अखिलशरीरावयवान्तःपातीति भावः । ननु केशनखादिषु स्पर्शस्यानुपलब्धिरिति चेत्,—तत्र प्राणमात्र तारतम्यात् प्राणैकवृत्तित्वात् तत्र स्पर्शस्य अननुभवः । चक्षुसः लक्षणं विदधाति रूपमात्रग्राहकं यत् इन्द्रियं तत्

रसमात्रगाहकमिन्द्रियं रसनं जिह्वाग्रवृत्ति । गन्धमात्रग्राहक-मिन्द्रियं घ्राणं, नासाग्रवृत्ति । ५

श्रोत्रादीनां पञ्चानामाकाशादीनि पञ्च क्रमेणाप्यायकानि भवन्तीति । भौतिकत्वमेषामुपचर्यते । एवं मनः प्राण-वाचां च क्रमात् पृथिव्यप्तेजोभिराप्ययणात्--तत्तन्मयत्वम् श्रुतिश्च "अन्नमयं हि सौम्य मनः, आपोमयः प्राणः, तेजोमयी वागिति" । ६

अन्त्यमपि पञ्चविधं-वाक्-पाणिपादपायूपस्थभेदात्तत्र वर्णोच्चारणहेतुरिन्द्रियं--वाक् हृत्कण्ठादिवृत्ति । यदुक्तं-"अष्टौस्थानानि वर्णानामुरःकण्ठः शिरस्तथा

जिह्वामूलं च दन्ताश्च नासिकोष्टौ च तालु चेति

---

चक्षुरित्यभिधीयते । तच्च चक्षुर्गोलकमध्यवर्त्तिकृष्णताराग्रवृत्ति । रसनेन्द्रियं लक्षयति रसमात्रग्राहकमिन्द्रियं जिह्वा । तच्च जिह्वाग्रवर्त्ति । तथा च गन्ध-मात्रग्राहकमिन्द्रियं घ्राणमिति । तस्य नासाग्रवृत्तित्वम् ॥ ५

अतः एषां इन्द्रियाणां भौतिकत्वमुपचर्यते । गौणतया तेषां भूतसम्बन्धित्वं सिद्धम् । यः यत्र नास्ति, स तत्र उपचर्यते । मनः-प्राण-वाचां, मनसः, प्राणस्य, वाचश्चापि क्रमेण, यथाक्रमम् पृथिव्यप्तेजोवाय्वाकाशानि अप्यय-कानि, वर्द्धकानि । तत्र श्रुतिप्रमाणं दर्शयति—अन्नमयं हि सौम्य मनः ।

अन्नपदेन पृथिवी लक्ष्यते । आपोमयः, जलमयः प्राणः, तेजोमयी वाक्, इति श्रुतिः पठति ॥ ६

पृथक्तया कर्मेन्द्रियाणि लक्षयति-तत्रेति वर्णोच्चारणहेतुरिन्द्रियं; वर्णोच्चारणार्थं कारणं यत् इन्द्रियं तच्च वागिति अभिधीयते । वागि-न्द्रियस्य स्थानं निरूपयति, वेदभाष्ये चोक्तमस्ति वर्णानामष्टौ स्थानानि

इति वेदभाष्ये। गवादिष्वष्टाभावात् तदभावः। शिल्पादिहेतुरिन्द्रियं पाणिः, मनुष्यादीनामङ्गुल्यादिवृत्तिः, हस्त्यादीनां तु नासिकाग्रादिवृत्तिः। सञ्चारहेतुरिन्द्रियं पादः, मनुष्यादीनां ङ्घ्रिवृत्तिः, उरगविहगादीनां उरः पक्ष्यादिवृत्तिः। मलादित्याग हेतुरिन्द्रियं पायुस्तदवयववृत्तिः आनन्दविशेषहेतुरिन्द्रियमुपस्थः, स च मेहनादिवृत्तिरिति। ७

सात्त्विकाहंकारादिन्द्रियाधिष्टात्र्यश्चन्द्रादयः चतुर्द्दश देवता भवन्ति। तेषु चन्द्रचतुर्मुखशङ्कराच्युतैः क्रमात् प्रवर्त्तितानि मनोबुध्यहंकारचित्तानि। संकल्पाध्यवसायाभिमान चिन्ताः प्रवर्त्तयन्ति। दिग्वातार्कवरुणाश्विनीभिः क्रमात्

---

वर्त्तन्ते, हृदयम्, कण्ठप्रदेशः तथा शिरश्च। जिह्वामूलं, दन्ताः, नासिका, ओष्टौ तालु चेति। गवादिषु अष्टाभावात्, अष्टौ स्थानानामभावात् तदभावः, वागिन्द्रियस्याभावः।

पाणीन्द्रियं लक्षयति–शिल्पादिहेतुः, शिल्पादि कार्यंकरणे असाधारणकारणं इत्यर्थः। हस्तेन्द्रियस्य स्थानं तावत् अङ्गुल्यादिवृत्ति। पादं लक्षयति—सञ्चार हेतु, एकस्मात् स्थानात् अन्यस्थानगमने यत् कारणं तच्च पदेन्द्रियम्। मलादित्यागहेतुरिन्द्रियं पायुः। आनन्दविशेषहेतुरिन्द्रियं उपस्थमिति। ७

सात्त्विकादहङ्कारात चतुर्द्दशेन्द्रियाधिष्ठात्र्यः देवताः उत्पद्यन्ते। तेषु क्रमेण, चन्द्र-चतुर्मुख- शङ्करा- च्युतैः मनोबुद्ध्यहङ्कार नोचित्तानि प्रवर्त्तन्ते। तेषां वृत्तयः प्रदर्श्यन्ते। मनः सङ्कल्पविकल्पात्मकम्। अहङ्कारस्य वृत्तिः अभिमानम्, निश्चयात्मिका च बुद्धिवृत्तिः। चिन्ता च वृत्तिः चित्तस्य दिक् - वायु - अर्क; सूर्यवरुणाश्विनीभिः प्र[illegible]त्तितानि श्रोत्र-त्वक्-चक्षुः

प्रवर्त्तितानि श्रोत्र-त्वक्-चक्षुः-रसन-घ्राणानिशब्द-स्पर्श-रूप-रस-गन्धान् प्रकाशयन्ति । अग्नीन्द्रोपेन्द्रयमप्रजापतिभिः क्रमात् प्रवर्त्तिता वाक्-पाणि-पाद-पाय्यूपस्थाः वचनादान-विहरणोत्सर्गानन्दानुभावयन्तीति । ८

तामसाहंकारस्तु तन्मात्राण्यन्तरीकृत्य पञ्चभूतान्युत्-पद्यन्ते । तामसाहंकारभूतवर्गयोरान्तरालिकः परिणामस्त-न्मात्रशब्दवाच्योऽविशेषशब्देन च कथ्यते । यथा दुग्ध-दध्नोरान्तरालिकः कललः परिणामस्तथैव दृष्टव्यः, भूत-वर्गस्तु विशेषशब्देनोक्तः । सूक्ष्मावस्था तन्मात्राणि स्थूलावस्था तु भूतानि इति । ९

एतां भूतोत्पत्तिप्रक्रियां बहुधा निरूपयन्ति । तस्मात् वा एतस्मादात्मनः आकाशः सम्भूतः, आकाशाद वायुरित्यादि श्रुत्यर्थच्छायामवलम्ब्य भूताद भूतोत्पत्तिरेके तदाहुः । किन्त-

---

रसन घ्राणानि-शब्द-स्पर्श-रूप रस गन्धान् प्रकाशयन्ति । अग्नीन्द्रोपेन्द्रयम-प्रजापतिभिः प्रवर्त्तिताः सन्तः वाक्-पाणि-पाद-पायूपस्थाः वचनादिषु प्रवृत्ताः भवन्ति । ८

तामसाहङ्कारात् पञ्चतन्मात्राणि उत्पद्यन्ते । तानि चाधिकृत्य पञ्चमहाभूतानि । तामसाहङ्कारभूतवर्गयोः आन्तरालिकः, मध्यवर्त्ती, प्रकृतेः परिणामविशेषः तन्मात्रमेवेति अवधार्यते । तानि तन्मात्राणि अविशेषः, सूक्ष्ममिति उच्यते । भूतवर्गस्तु विशेषः इति । प्रकृतेः सूक्ष्मविकृतानि तन्मात्राणि, स्थूलविकृतानि महाभूतानीति । ९

एतां भूतोत्पत्तिरूपां सृष्टिप्रक्रियां बहुधा, बहुरूपेण निरूपयन्ति न्यायविदः । प्रथमं वेदान्तिनां मतमुपस्थापयन्ति तस्मादिति । तस्मात्

दासीदित्यादि सुवालश्रुतिं– 'तस्मादहंकारात् पञ्चतन्मात्राणि, तेभ्यः भूतानीति" गोपालश्रुतिं च दृष्ट्वा केचिदेवं वदन्ति । भूतादेरहंकारात् पञ्चापि तन्मात्राण्युत्पद्यन्ते । तेभ्यः क्रमात् पञ्चमहाभूतानिति । तां तां च श्रुतिं निभाल्य परेत्येवं वर्णयन्ति । भूतादेः शब्दतन्मात्रं, तस्मात् आकशः, आकाशात् शब्द-स्पर्शतन्मात्रं, तस्माद् वायुः, वायोः शब्द-स्पर्श रूपतन्मात्रं,तस्मात्तेजः, तेजसः शब्दस्पर्शरूपरसतन्मात्रं, तस्मादापः, अद्भ्योः शब्द–स्पर्श-रूप-रस-गन्धतन्मात्रं, ततः पृथिवीति । १०

एषां पञ्चानां लक्षणानि । अस्पर्शवत्त्वे सति विशिष्ट-स्पर्शशब्दाधारत्वमाकाशत्वम् । विशिष्टरूपवत्त्वे सति रूप-शून्यत्वम्, अनुष्णाशीतस्पर्शवत्त्वे सति गन्धशून्यत्वम् वायु-

---

ईश्वरसकाशात् आकाशः सम्भूतः,आकाशात् वायुः,वायोः अग्निः अग्नेः, आपः, अदभ्यः पृथिवी इत्यादिक्रमेण सृष्टिःरिति एके अद्वैतवेदान्तिनः वदन्ति । तस्मात् अहङ्कारात् पञ्चतन्मात्राणि, रूप-रस-गन्ध-स्पर्श-शब्दाख्यानि । तेभ्यः पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानि क्षित्यप्-तेजो-वायु-राकाशाख्यानि इति सुवालश्रुत्यनुसारेण मन्यन्ते सांख्याः । एतां श्रुतिमवलोक्य, निभाल्य, पार्श्वालोच्य केचित् वदन्ति भूतादेः, अहङ्कारात् शब्दतन्मात्रं, तस्मात् शब्दतन्मात्रात् आकाशः, आकाशात् शब्दस्पर्शतन्मात्रं, स्पर्शतन्मात्रात वायु । वायोः शब्द-स्पर्श-रूपतन्मात्रं, तस्मात् रूपतन्मात्रात् तेजः तेजसः शब्द-स्पर्श-रूप-रसतन्मात्रं, तस्मात्, रसतन्मात्रात् आपः, जलानि, अदभ्यः शब्द-स्पर्श-रूप-रस-गन्दतन्मात्रं ततः गन्धतन्मात्रात् पृथिवी । १०

पञ्चीकरणरीत्या आकाशादीनां–क्रमेण विशिष्टस्पर्शादिकं सर्वत्र योज्यम् । ११

त्वम् । विशिष्ट रसवत्त्वे सति उष्णस्पर्शवत्त्वं भास्वररूपवत्त्वं वा तेजस्त्वम् । शीत स्पर्शवत्त्वे निर्गन्धत्वे सति विशिस्टगन्धवत्त्वं–वाप्त्वम् स्पर्शादिवत्त्वे सति विशिष्टगन्धवत्त्वं–पृथिवीत्वम् । ११

भूतानां पंचीकृतत्वात् शब्दादीनां सर्वत्रोपलम्भो नाम नानुपपन्नः । पञ्चीकरणं तु इत्थं बोध्यम् । सर्वेश्वरो हरिः पञ्चानि भूतानि सृष्ट्वा तानि प्रत्येकं द्विधा समं विभज्य तयोः पञ्चकयोरेकं प्रत्येकं चातुर्विध्येन समं विभज्य तेषां चतूर्णां भागानां स्व स्वस्थूलभागत्यागेनान्यस्मिन् योजितानीति । यदुक्तं–"विभज्य द्वेधा पञ्चभूतानि देव स्तदर्द्धानि पश्चात् विभागानि कृत्वा तदन्येषु मुख्येषु तं तं नियुंजन् पञ्चीकृतिं पश्यति स्मेति" । १२

---

एकस्मिन्नेव भूते अन्येषां सर्वेषां भूतानामस्तित्वे कारणं वर्णयति- तेन पञ्चीकरणप्रक्रियां अभिदधाति । सर्वेश्वरः हरिः पञ्चानिभूतानि सृष्ट्वा तत् प्रत्येकं द्विधा विधाय पुनः प्रत्येक भागचतुष्टयेन विभज्य तेषां चतूर्णां भागानां स्वस्वस्थूलभागेन सह योजयति । अनन्तरं एकस्मिन् एव भूतविषये अन्येषां चतूर्णां भूतानां सम्मिश्रणम् । परन्तु "प्राधान्येन व्यपदेशाः भवन्ति" इति न्यायेन स्थूलभागमाधारीकृत्य आकाशादीनां स्वतन्त्रतया व्यपदेशः, एवं चोक्तमस्ति—

द्विधा विधाय चैकैकं चतुर्द्धाप्रथमं पुनः
स्वस्वेतरद्वितीयांशैर्योजनात् पञ्चपञ्चते ॥

एवं चोक्तमस्ति— यत्, "विभज्य द्विधा पञ्चभूतानि देव स्तदर्द्धानि पश्चात् विभागानि कृत्वा तदन्येषु मुख्येषु तं तं नियुञ्जान्, नियोजयित्वा सः पञ्चीकृतिं पश्यति स्मेति" । १२

एभ्यः पञ्चीकृतेभ्यः भूतेभ्यः चतुर्द्दशलोकखचिताण्डानि सन्तीति । तेषु भूर्भुवःस्वः-महर्जनस्तपःसत्याभिधाः सप्त-लोकाः उपर्य्युपरि सन्ति । अतल-वितल-सुतल रसातलतला-तल महातल-पातालाख्याः सप्तत्वधोऽधः सन्तीति । तेभ्यः एव जरायुजाण्डजस्वेदजोद्भिज्जानि चतुर्विधानि शरीराणि चान्तर्वर्त्तिनां जीवानां उत्पद्यन्ते । तेषु मनुष्यपश्वादीनि जरायुजानि, पक्षीपन्नगादीनि अण्डजानि, यूकमशकादीनि स्वेदजानि, तरुगुल्मादिनि उद्भिजानीति । १३

इह दिक् पृथग्द्रव्यं न कल्प्यते । सूर्यपरिस्पन्दनादिना आकाशस्यैव प्राच्यादिरूपतासिद्धेः । दिक् सृष्टिस्त्वन्तरीक्षादि-सृष्टिवत् सिध्यति । १४

---

एभ्यः पञ्चीकृतेभ्यः, स्थूलेभ्यः भूतेभ्यः, चतुर्द्दशलोकानां, चतुर्द्दशभुवनानां सृष्टिर्जाता, चतुर्द्दशभुवनानां नामानि निर्द्दिशति—भूः, भूवः, स्वः, महः, जनः, तपः, सत्यमिति सप्तस्वर्लोकाः । अतल वितलादयः सप्तपाताललोकाः भवन्ति । तेभ्यः भूतेभ्यः अण्डज–स्वेदज–उद्भिज्ज–जरा-युजभेदेन चतुर्विधः जीवसमुदायः उत्पद्यते । तेषु चतुर्षु प्रकारेषु, भूतयोनिषु पशुमनुष्यादीनि जरायुजानि, पक्षीपन्नगादीनि अण्डजानि, यूकमशकादीनि स्वेदजानि, तरु गुल्मादीनि उद्भिज्जानीति । १३

इह, वेदान्तशास्त्रे, प्राच्यादिव्यवहारहेतुः या दिक् नैयायिकैः पृथक्पदार्थरूपेण स्वीक्रियते तन्नाङ्गीकृतम् । सूर्यस्य परिस्पन्दनेन, प्रतीय-मानगतिवशात् आकाशस्य एव दिक्रूपतासिद्धिः । तत्र द्रव्यान्तरपरि कल्पनं नैव समीचीनमिति भावः । अन्तरीक्षादिसृष्टिवत् दिक्सृष्टिः । तत्र द्रव्यान्तरपरिकल्पनं न युक्तम् । गौरवसद्भावात् । १४

प्राणो न पृथक्तत्वम् । अवस्थान्तरापन्नस्य वायोरेव तत्त्वेन सिद्धेः । स च पञ्चविधः प्राणापानसमानोदानव्यान भेदात् । महदादीनि पृथिव्यन्तानि तत्त्वानि समष्टिः, तेष्वेक-देशोपादानेन क्रियमाणानि कार्य्याणि तु व्यष्टिरुच्यते । १५

अपरे तु अष्टौ प्रकृतयः षोडशविकाराः इति श्रुत्यनु-सारेण भूतादेः शब्दतन्मात्रं, तस्मादाकाशः स्पर्शतन्मात्रं चोत्पद्यते । स्पर्शतन्मात्राद् वायुः रूपतन्मात्रं च, रूपतन्मा-त्रात् तेजो रसतन्मात्रं च, रसतन्मात्रात् आपो गन्धतन्मात्रं च सहवोत्पद्यते, गन्धतन्मात्राद भूमिरिति वर्णयन्ति । एष्वा-काशादिषु पंचसु शब्द-स्पर्श-रूप-रस-गन्धाः पञ्चगुणाः । यथोत्तरमेकैकाधिक्येन व्यज्यन्ते । तत्राकाशे शब्दः एकः । वायौ शब्दस्पर्शौ, तेजसि रूपान्तास्त्रयः । अप्सु रसान्ताश्च-त्वारः पृथिव्यां तु गन्धान्ताः पंचेति, इह तन्मात्राणां विषयाणां समाननामत्वश्रवणादभेदो न शक्यः । पूर्वेषां भूत-कारणत्वेन परेषां भूतधर्मत्वेन भेदात् । तदित्थं प्रकृतिः महदहङ्कारैकादशेन्द्रियतन्मात्रपंचक-भेदेन चतुर्विंशति तत्त्वानि वर्णितानि । १६

---

प्राणस्य पृथग्द्रव्यत्वं निवारयति । तस्य वायुरूपत्वात् । प्राणा-पानादयः वायोः अवान्तररूपभेदाः । महदादीनि पृथिव्यन्तानि त्रयोविंशतित-त्त्वानि समष्टिः उच्यते । पृथक्तया तेषां व्यपदेशः व्यष्टिरीत्यभिधीयते । १५

अर्थः स्पष्टः — ॥ १६ ॥

एषु प्रकृत्यादित्रिकं भूतपंचकं च स्थूलदेहस्योपादानम् । इन्द्रियाणि तु भूषणार्पितरत्नानीव तदाक्रम्य तिष्टन्ति । पंचतन्मत्राण्येकादशेन्द्रियाणि प्राणश्च सूक्ष्मदेहस्योपादानमिति व्याख्यातारः । १७

शरीरत्वं हि चेतनं प्रति नियमेनाधेयत्वं विधेयत्वं शेषत्वं च । भोगायतनं चेष्टाश्रयो वा शरीरमित्यादि लक्षणं तु दुष्टं, पत्नी शरीरादौ अव्याप्तेः । इह प्रकृत्यादेरुत्पद्यमानं महदादि न द्रव्यान्तरम् । नहि मृत्पिण्डाद्युत्पद्यमानं घटादिकमर्थान्तरमुपलभ्यते । किन्तु अवस्थान्तरमेव तत्रोत्पद्यते । तावतैव नाम, संख्या, व्यवहारादि-

---

एषु चतुर्विंशतितत्त्वेषु प्रकृत्यादित्रिक, प्रकृतिमहतत्त्वाहङ्कारश्चेति तत्त्वत्रय, पञ्चमहाभूतं च स्थूलदेहस्योपादानम् । उक्त च गीतोपनिषत्सु —

भूमिरापोऽनलो वायुः ख मनोबुद्धिरेव च
अहङ्कारः इतीयं मे भिन्नाः प्रकृतिरष्टधा ॥

एतेषां अष्टानां प्रकृतीनां सृष्टि प्रति कारणत्वम् । तत्र स्थूलशरीरं प्रति इन्द्रियाणामावश्यकता दर्शयति । यथैव शरीरे रत्ननिर्मिताः अलङ्काराः तया शोभां वर्द्धयन्ति तद्वत् इन्द्रियाणामुपादेयता स्थूलशरीरे । सूक्ष्मशरीरस्य गठनप्रकारं दर्शयति— पञ्चतन्मात्राणि, रूप-रस गन्ध-स्पर्श-शब्दाख्यानि, प्राणश्च-प्राणापान-समान उदान व्यानाः दशेन्द्रियाणि च सूक्ष्मशरीरस्योपादानम् । १७

चेतनं प्रति नियमेन आधेयत्वं विधेयत्वं, शेषत्वं च शरीरत्वमिति शरीरलक्षणमुक्तम् । चेतनं नाम जीवात्मा, तं प्रति शरीरमाश्रितम् । अभिधेयाश्रितस्वरूपं, अन्तराश्रितस्वरूपं च । अर्थात् यद्यपि आत्मनः अधिष्ठानस्वरूपं शरीरं अधराभूतं परिलक्ष्यते / तथापि आत्मनः आश्रये विना

र ण-

भेदसिद्धिः । नान्यथा सेनावनराश्यादिव्यवहारः सिध्येत् । तस्मादेकस्मिन् द्रव्ये कारणकार्ये द्वे अवस्थे । ते च मिथो भिन्ने द्रव्यतो भिन्ने भवतः । तन्तुपटात्मकं मिथो भिन्नं द्रव्यमिति तार्किकाः मन्यन्ते । तन्न अनुपलम्भादुन्मानद्वैगुण्यापत्तेश्च । भेदाभेदमिति संख्याः प्राहुः । तच्च

---

नाधिष्ठानरूपशरीरं तिष्ठति । अतः आत्मनः आश्रितमिदं शरीरम् । पुनश्च जीवात्मनः वहिरङ्गाख्यया मायया आवृत्तस्वरूपत्वात् भगवद्दास-भूतं स्वकीयं स्वरूपं स नवबुध्यते । यदैव स्वस्वरूपं प्रयोजनं च भगवत् चरणारविन्देप्रेमभक्ति इति जानाति तदैव तत्र प्राप्तये श्रवणकीर्त्तनाद्यभिधेय-स्वरूपसाधनलक्षणां भक्ति यजते । अतो शरीरस्य आत्मानं प्रति विधेयत्वं नाम अभिधेयाश्रितत्वम् सिध्येत्, प्रयोजनोपकरणत्वात् । प्रयोजनं च लभ्य देहं आत्मा त्यजति—अतः आत्मनः अन्तिमाश्रितत्वं शरीरत्वमिति दिक् । न च भोगायतनं, चेष्टाश्रयं वा शरीरमिति वाच्यम् । यत्तु वदन्ति शरीरं भोगायतनं चेष्टाश्रयं वा तन्मन्दम् । पत्नीशरीरादौ अव्याप्तेः । लक्ष्यैकदेशे पुत्रशरीरे मातृपित्रादिशरीरे वा भोगायतनस्या-प्रसिद्धेः, अस्त्रोपचारादि कालिके शरीरे चेष्टाराहित्याल्लक्षणस्य अव्याप्ति प्रसक्तात्वाच्च लक्षणमेतद्दोषावहमिति दिक् ।

प्रकृतेः महत्तत्त्वादीनां द्रव्यान्तरत्वं न सिध्यति नामसंख्यादिव्यवहारमात्रभेदत्वात् मृत्पिण्डतः घटवत् । कार्यकारणयो-रैक्यमिति यावत् । नैयायिकानां सम्मतः कार्यकारणभेदो नाङ्गीकार्यः अनुपलब्धेः कारणतः कार्यस्य द्विगुणाद्यापत्तेः । परमाणतः द्यणुकादिकार्यं यावत् परिमाणानां वाहुल्यात् । सांख्यसिद्धान्तितः भेदाभेदोऽपि न समीचीनः भेदाभेदयोः परस्परविरोधात् । तन्मतसत्कार्यवादोऽप्यप्रतिष्ठते च ।

न, विरोधात् । तस्मादभिन्नमेव कारणात् कार्यमिति । १८

इति श्रीवेदान्तस्यमन्तके प्रकृतितत्त्व-
निरूपणश्चतुर्थकिरणः समाप्तः ।

—0—

## पञ्चमः किरणः

अथ कालतत्त्वनिरूपणम् । त्रैगुण्यशून्यो जडद्रव्य-विशेषः कालः, स हि भूतभविष्यत्-वर्त्तमानयुगपच्चिर-क्षिप्रादिव्यवहारस्य सर्गप्रलययोश्च हेतुः क्षणादिपरार्द्धान्त-श्चक्रवत् परिवर्त्तमानो वर्ण्यते । "ज्ञः कालकालो गुणी सर्वविद्यः"

---

कारणस्य प्रकृतेः नित्यत्वात् महदादेःकार्यस्यानित्यत्वात् । अतएव मतान्तराणां सिद्धान्ताभासत्वाद् भ्रमादिदोषशून्यापौरुषेयवेदसिद्धान्तेकः कार्यकारणयोरभेदः सिद्धः इति दिक् ॥ १८

इति श्रीवेदान्तस्यमन्तके प्रकृतितत्त्वनिरूपणे
चतुर्थकिरणे तत्त्वप्रदीपनी टीका समाप्ता ।

—0—

अथ, प्रकृतिनिरूपणानन्तरं कालस्य, नाम समयतत्त्वस्य निरू-पणम् । कालस्य लक्षणं विदधाति—त्रैगुण्यशून्य इति । त्रैगुण्यशून्यो,सत्त्व-रजस्तमोविकारशून्यः, जडद्रव्यविशेषः कालः । स हि कालः भूत-भवि-ष्यत्-वर्त्तमानरूपः, अर्थात् अतीतादिव्यवहारहेतुः युगपत् चिर-क्षिप्रादि-

"योऽयं कालस्तस्य तेऽव्यक्तवन्धोऽचेष्टामाहुश्चेष्टते येन विश्वम् । निमेषादिवत्सरान्तो महीयांस्तन्त्विशानं क्षेमधाम प्रपद्ये, कालचक्रं जगच्चक्रमित्यादि श्रुतिः स्मृतिश्च ।

"नित्यो विभुश्चैषः" सदेव सौम्येदमग्र आसीत्" इत्यादिषु सर्गात् प्रागपि तस्य सत्त्वावगमात् । सर्वत्र कार्योपलम्भाच्च—न सोऽस्ति प्रत्ययः लोके यत्र कालो न भासते" इति ।

सर्वनियामकोऽप्ययं परमात्मना नियम्यो भवति । ज्ञः

---

व्यवहारकारणस्वरूपः, एकस्मिन्नेव समये अतीतादिव्यवहार-कारणम् । सर्ग-प्रलययोः, सृष्टिविषये, प्रलयविषये च हेतुः, क्षणपरिमितेः आरभ्य परार्द्धसंख्याव्यवहारपर्यन्तं पुनः प्रतिक्षणं परिवर्त्तमानश्च कालः इति उपवर्ण्यते । कालस्य भगवदधीनत्वं प्रकाशयति ज्ञः इति । ज्ञः, सर्वेषां ज्ञाता, काल कालः, कालस्य अपि कालः, तस्यापि विनाशकर्त्ता परमात्मा "अन्तासि लोकस्य सचराचरस्येति भावः । गुणी, अखिलकल्याण-गुणानां आश्रयः श्रीमद्भागवते चोक्तमस्ति— हेऽव्यक्तवन्धो । ईश्वर, योऽयं कालः, येन कालेन विश्वमखिलं निर्मितम् । निमेषादा-रभ्य महासम्वत्सररूपः कालः यस्य च भगवतः भ्रूभङ्गमात्रम् । तं भगवन्तं प्रपद्ये इति, श्रुतिश्च पठति कालचक्रं जगत्चक्रमिति । परिवर्त्तनरूपं जगत् कालस्यैव परिणाममात्रम् । एषः कालः नित्यः । उत्पत्तिविनाशशून्यः । विभुः; सर्वव्यापी चेति । "सदेव सौम्य इदमग्र आसीत्" इत्यादिषु श्रुतिवाक्येषु सृष्टेः प्रागेव कालस्य सत्ता सिद्धेति भावः ।

न सोऽस्ति प्रत्ययः, अर्थात् तादृशः कोऽपि अनुभवो नास्ति यत्र कालः न भासते । कालः सर्वदा अस्तीत्यर्थः । सर्वनियामकोऽपि अयं

काल-काल इति श्रवणात् चच्चेष्टात्वस्मरणाच्च । अत-
स्तन्नित्यविनाभूतौस्य प्रभावः । न यत्र कालो जगतां परः
प्रभुः, कुतोऽनु देवाः जगतां य ईश्वरे इत्यादि स्मृते। १

इति श्रीवेदान्तस्यमन्तके कालतत्त्वनिरूपणः

पञ्चमः किरणः समाप्तः ॥

---

कालः परमात्मना नियम्यो भवति । ईश्वरपरतन्त्रं इदं कालतत्त्वमित्यर्थः । अतः भगवदधीनत्वात् कालस्य तस्य नित्यबिभूतौ भगवत नित्यलीला-परिकर-धामसु न प्रभाव इति निष्कर्षः । तत्र स्मृतिप्रमाणं "न यत्र कालो जगतां परः प्रभु" इति ॥ १

इति श्रीवेदान्तस्यमन्तके पञ्चमकिरणे

कालनिरूपणे तत्त्वप्रदीपनी टीका समाप्ता ।

—0—

# षष्ठः किरणः

अथ कर्म निरूप्यते । तच्च क्रियारूपं कृतिसाध्यमपि कृतिभवनादिसिद्ध-बीजाङ्कुरादिवदनादिसिद्धमुक्तम् । "न कर्माविभागादिति चेन्न-अनादित्वादिति" । तत् खलु अशुभं शुभं चेति द्विविधम् । वेदेन निषिद्धं नरकाद्यनिष्टसाधनं ब्राह्मणहननाद्यशुभं, तेन विहितं काम्यादि तु शुभम । तत्र स्वर्गादीष्टसाधनं ज्योतिष्टोमादि काम्यम् । अकृते

---

अथ, कालतत्त्वस्य निरूपणानन्तर कर्म निरूप्यते । तच्च कर्म, कृतिसाध्यमपि, पुरुषेण कृतमपि अनादिसिद्धं बीजाङ्कुरवत् । बीजस्य प्राथम्यं; अङ्कुरस्य प्राथम्य वा, अनिश्चयात् । बीजाङ्कुरवत् अनादिसिद्धमपि कर्म भोगानन्तरं विनश्यति । यथा प्रागभावः अनादिसिद्धोऽपि विनाश्यः, तथैव । कर्मणः अनादित्वं प्रदर्शयति—नेति । यद्येवं आशङ्क्यते यत् सृष्टेः प्राक् कर्म न तिष्ठति तत्र—प्रमाणं दर्शयति-वेदान्तसूत्र तावत् "न कर्माविभागादिति चेन्न अनादित्वात् । इत्यत्र यद्यपि सृष्टि प्रति ईश्वरस्य कारणत्वं स्वी क्रियते, तथापि कर्मापेक्षया एव । अन्यथा परमेश्वरे ब्रह्मणि वैषम्य-नैर्घुण्यदोषापत्तिः । स्मृतौ अपि उक्तं यत्

अवश्यमेवभोक्तव्यं प्राप्तकर्मशुभाशुभम्

नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥

भेदं दर्शयति-तदिति । तत्र कर्म शुभमशुभं चेति द्विविधम् । निषिद्धकर्म लक्षयति-वेदेनेति । नरकाद्यनिष्टसाधनं यत् कर्म तदशुभम् । यथा ब्राह्मणहननादीनि । तेन, वेदेन विहितं, यत् कर्म तत् शुभात्मकम् । तत्र काम्यादिकं स्वर्गादिसाधनं ज्योतिष्टोमादियज्ञविशेषरूपं इष्टकर्म शुभमिति भावः । नित्यकर्म लक्षयति-अकृते इति । अकरणे प्रत्यवायजनकं, उप-

प्रत्यवाय जनकं सन्ध्योपासनाग्निहोत्रादिनित्यम् । पुत्र-जन्माद्यनुबन्धि-जातेष्ट्यादि-नैमित्तिकम् । दुरितक्षयकरं चान्द्रायणादि प्रायश्चितमिति शुभ बहु विधम् । एषु निषिद्धमिव काम्यं च मुमुक्षोः हेयमेव मुक्तिप्रतिबन्धि-फलत्वात् । नित्यादिकं तु चित्तशुद्धिकरत्वात् तेनानु-ष्ठेयमेव । १

किञ्च, ज्ञानोदयात् पूर्वं यत् सञ्चितं तत् शुभ-मशुभं च ज्ञानेन विनश्यति । ततः परं क्रियमाणं, न तेन विद्वान् विलिप्यते । तद्यथेषितुलमग्नौ प्रोतं प्रदूयेतवं-हास्यसर्वपाप्मानः प्रदूयन्ते इति । यथा पुष्करपलाश आपो

---

राधसाधनानि नित्यकर्माणीति भावः । नैमित्तिकानि च लक्षयति—पुत्र-जन्माद्यनुबन्धीति । पुत्रादिजन्मनिमित्तं क्रियते यानि कर्माणि तानि किल नैमित्तिकानि । प्रायश्चितकर्म लक्षयति—दुरितक्षयकरं, पापादिक्षयकारकं चान्द्रायणादीनि व्रतानि प्रायश्चितकर्माणि । एषु नित्य-नैमित्तिक-काम्य-निषिद्धकर्मसु निषिद्धमिव, यथा निषिद्धं कर्म हेयं, तथा काम्यं च मुमुक्षोः मुक्तिकामिनः पुरुषस्य हेयं, परिहार्यम्, तस्य काम्यादेः कर्मणः स्वर्गादि फलकत्वात् । तस्य अनित्यत्वमपि श्रुति-स्मृतिप्रसिद्धमेव । श्रुतिप्रमाणं च "यथेहकर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितः लोकः क्षीयते । स्मृतिश्च-"क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति पठति । नित्यकर्मणां विधे-यत्वं दर्शयति—नित्यादिकं तु इति, नित्यकर्मणां चित्तशुद्धिकरत्वात्, मुमुक्षुणा पुरुषेणापि तदनुष्ठेयम् । १

ज्ञानोदयात् पूर्वं यत् सञ्चितं, पूर्वजन्मनि कृतं शुभात्मकम-शुभात्मकं वा सर्वं ज्ञानेन, तत्त्व-ज्ञानेन विनश्यति । तत्र क्रियमाणं,

न श्लिष्यते एवमेवात्मविदि पापं कर्म न श्लिष्यते इति च छान्दोग्यश्रुतिः । अत्र सञ्चित-क्रियमाणयोः पापयोः विनाशविश्लेषावुक्तौ ।" उभे उहैवैषः एते तरत्यमृतः साध्व-साधुनी इति बृहदारण्यकश्रुतिः । तत्र तयोः पुण्यपापयोस्तौ दर्शितौ उभे सञ्चित-क्रियमाणे साध्वसाधुनी पुण्यपापे एषः विद्वान् तरति, उल्लङ्घयति । सञ्चितयोर्विनाशः, क्रिय-माणयोस्त्वश्लेषः इत्यर्थः । २

ज्ञानेनैव विनिवृत्तकर्ममलस्तेनैव हरिपदं प्राप्य अक्षय-सुखभाक्, तत्रैव निवसति । ततः पुनः न निवर्त्तते । "ब्रह्मविदाप्नोति

---

सम्प्रति कृतं यत् कर्म, तेन कर्मणा विद्वान् न लिप्यते । यथा तुलं, अग्निना अनायासेन प्रज्वलते, दह्यते, तथा ज्ञानेन कर्माणि नश्यन्ति ।

"सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते" इति स्मृतिप्रमाणात् ।

यथा पुष्करपलाशः, पद्मपत्रं, आपः; जलानि न श्लिष्यते, स्पृशति, तद्वत् ज्ञानिनः कर्माणि न लिप्यन्ते । उक्तं च भगवद्गीतासु—

यथैधांसि समिद्धोऽग्निः भस्मसात् कुरुतेऽर्जुन ।

ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ।

पुनश्च उक्तमस्ति— ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः

लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ।

इति स्मृतिश्च । ज्ञानेन अपरोक्षानुभूतिपूर्विकया शुद्धभक्त्या उभे, सञ्चित, क्रियमाणं च पुण्यपापे इति, शुभ तमकमशुभात्मकं द्विविधं कर्म विनश्यति इति भावः । विद्वान् तरति, कर्माणि उल्लंघयति । २

इत्थं उपर्युक्तप्रकारेण ज्ञानमाध्यमेन तत्त्वज्ञानेन विनिवृत्तकर्ममलः कर्मफलं विनिवृत्तं, यस्य सः हरिपदं प्राप्य अक्षयसुखभाक् सन् तत्रैव वैकुण्ठादौ लोके निवसति । पुनस्ततस्ते न निवर्त्तन्ते तत्रापि

परम्", । "तमेव विदित्वाति मृत्युमेति
नान्यः पन्था विद्यतेऽयनाय'
"सोऽश्नुते सर्वान् कामान्, न स: पुनरावर्त्तते" इति श्रवणात् । ३

तच्च ज्ञानं द्विविधम् । परोक्षमपरोक्षं च परोक्षं शाब्दम्, अपरोक्षं तु ह्लादिनीसारसमवेतसम्वित्रूपम । यच्च भक्तिशब्दव्यपदेश्यं दृष्टम् । "विज्ञान घनानन्दघन सच्चिदानन्दैकरसे भक्तियोगे स तिष्ठति" । इति गोपालतापन्युपनिषदि । तत्र पूर्वं परम्परया परन्तु साक्षात्

---

स्मृतिः, "न तद्भासयते सूर्यो न शशाङ्को न पावकः,
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ।"
ब्रह्मविद्याप्नोति परम्" ब्रह्मवित् जनः परमं विष्णोः पदं प्राप्नोति । तमेव विदित्वा अति मृत्युमेति, अमृतत्वं प्राप्नोति । 'सः अश्नुते सर्वान कामान्" । सर्वेषां कामानां मुक्तिव्याधिकामानामुपभोक्तुं... समर्थो भवति इति भावः । एवं श्रवणात श्रीहरिपदप्राप्तिः निष्कामकर्मात्मकज्ञानविशेषरूपायाः हरिभक्तेः चरमफलमेवेति सिद्धम् । ३

ज्ञानं विभजते तच्चेति । परोक्षं, शास्त्रादिजन्यं शब्दज्ञानं अपरोक्षं, ह्लादिनीसारसमवेतसम्वितरूपम । ज्ञानानन्दैकरसस्वरूपमिति भावः । यत अपरोक्षं ज्ञानं तच्च भक्तिशब्दव्यपदेश्यं दृष्टम् । तत्र पूर्वं, परोक्ष ज्ञानं, परम्परया क्रमेणैव ब्रह्मप्रापकम् । अपरोक्षं संम्वितसारसमवेतरूपं तु साक्षाद्रूपेण परंब्रह्मप्रापकमेव । केचित्तु, केषाचित् मतानुसारं महत्तम प्रसङ्गलवयेन, सत्प्रसङ्गप्रसादेन श्रवण-कीर्तनादिकर्मणैव, कर्मपदेन, केवलभक्तिसाधनकर्मणां व्यपदेशः । तादृयेन भक्तिरूपकर्म

ब्रह्मप्रापकं बोध्यम् । केचित्तु महत्तमप्रसङ्गलब्धेन शुद्धभक्तियोगरूपेण श्रवण-कीर्तनादिकर्मणैव चित्तशुद्धिं हरिपदं च लभन्ते इति दृष्टम् ।

पिबन्ति ये भगवतः आत्मनः सतां
कथामृतं श्रवणपुटेषु सम्भृतम् ।
पुनन्ति ते विषयविदुषिताशयं
व्रजन्ति तच्चरणसरोरुहान्तिकम् ॥

इत्यादिषु । ४

तदित्थं तत्त्वपञ्चकं विस्तृतं श्रीवैष्णवे चोक्तमेतत् ।

विष्णोः स्वरूपात् परतो हि तेऽन्ये
रूपे प्रधानं पुरुषश्च विप्र
तस्यैव तेऽन्ये च धृते वियुक्ते
रूपेण यत्तद् द्विज कालसंज्ञं ॥

जनैश्च कर्मस्तिमितात्मनिश्चयैरित्यादिना । तदेवमेतत्तत्त्व-

---

चित्तशुद्धिं विधाय हरिपदं लभन्ते भक्तः इति भावः । उक्तं च श्रीमद्भागवते; ये खलु सतां मुखात्, आत्मनः अत्यस्वरूपस्य भगवतः कथामृतं श्रवणपुटेषु पिबन्ति ते विषयविदुषिताशयं अनादिकर्मवासनां मयान्तकरणं पुनन्ति, पवित्रीकुर्वन्ति । तच्चरणसरोरुहान्तिकं, तत्पादपद्म मूलं व्रजन्ति, प्राप्नुवन्ति । ४

तदित्थं तत्त्वपञ्चकं, ईश्वर-जीव-प्रकृति-काल-कर्माख्यं च श्रीवैष्णवे, श्रीविष्णुपुराणे उक्तमस्ति । विष्णोः स्वरूपात्, निरूपाधिकात् भगवत् सकाशात् प्रधानं पुरुषश्च भिन्नः एव । अपि तु प्रकृति पुरुषयोः परमात्मना संयोगः वियोगश्च सृष्टि-प्रलययोः कारणम् । तच्च भगवतः परस्य ब्रह्मणः कालसंज्ञरूपम् । विवेकी केवलं एतत् पञ्चक ज्ञात्वा

पञ्चकविवेकी वर्णितसाधनसम्पत्तिमान् विशुद्धः श्रीहरि-पदमुपलभ्य तत्रैव सर्वदा दीव्यति इति । ५

नित्यं निवसतु हृदये चैतन्यात्मा मुरारिर्नः
निरवद्य निवृत्तिमान् गजपतिरनुकम्पया यस्य ।

राधादिदामोदरनामविभ्रता
विप्रेण वेदान्तमयः स्यमन्तकः
श्रीराधिकायै विनिवेदितो मया
तस्याः प्रमोदं स तनोतु सर्वदा ॥ ६

इति श्रीवेदान्तस्यमन्तके कर्मतत्त्वनिरूपणः

षष्ठः किरणः समाप्तश्चायं ग्रन्थः

---

तत्त्वतः विदित्वा वर्णितसाधनसम्पत्तिमान्, श्रद्धोपपत्तिपूर्विका, गुरूप-सत्त्यनन्तरं हरिपदयुगमुपलभ्य सर्वदा दीव्यति, आनन्दं प्राप्नोति । ५

यस्य अनुकम्पया, प्रसादेन गजपतिः निरवद्यः, दोषरहितः, दयुत्स्वभावत्या-गपूर्वकं निवृत्तिमान् नित्यपार्षदत्वं रूपपरमानन्दं प्राप्तवानिति भाव । सः भगवान् नः, अस्माकं हृदये चैतन्यात्मा चिन्मयस्वरूपः मुरारिः निवसतुः पुनश्च यस्य श्रीकृष्णचैतन्यदेवस्य अनुकम्पया करुणया यः गजपतिः प्रतापरुद्रः, निरवद्यः, कामादिदोषशून्यः सन् निवृत्तिमानभवत् सः चैतन्यात्मा मुरारिः ।

प्रेमपुरुषोत्तमः श्रीकृष्णचैतन्यस्वरूपः भगवान् नोऽस्माकं हृदये निवसतु । येन वय निर्मलान्तःकरण सन्तः भगवद्वशीकाररूपां प्रेम-उक्ति लभामहे ।

श्रीराधादामोदराभिधविप्रवरप्रेरितेन मया वेदान्तशास्त्राणां स्यमन्तकमणिसदृशमिदं ग्रन्थरत्नं सर्वेश्वर्याः श्रीमत्याः राधिकायाः प्रीति-विधानाय विनिवेदितम् । ग्रन्थरत्नमिदं सततं तस्याः आनन्दं वर्द्धयतु । येन सर्वेषां प्राणिनां सर्वविधं मङ्गलं तनोतु, विस्तार्यतामिति इति । ६

इति श्रीवेदान्तस्यमन्तके कर्मतत्त्वनिरूपणे

तत्त्वप्रवीण्नी टीका समाप्ता

—*—